MADRAS GOVERNMENT ORIENTAL MANUSCRIPTS
SERIES—24




# वैशम्पायननीतिप्रकाशिका

(सीतारामकृततत्त्वविवृतिसहिता)

# NĪTIPRAKĀŚIKĀ

BY

**VAIŚAMPĀYANA**

WITH

**TATTVAVIVṚTI**

OF

**SĪTĀRĀMA**

EDITED BY

T. CHANDRASEKHARAN, M.A., L.T.,
*Curator, Government Oriental Manuscripts Library, Madras*

(*Prepared under the orders of the Government of Madras*)

PRINTED BY THE SUPERINTENDENT
GOVERNMENT PRESS
MADRAS
1953

# PREFACE

DHANURVEDA or the branch of knowledge which deals with the different varieties of weapons and arms is one of the four Upa-Vedas, namely, ĀYURVEDA, DHANURVEDA, GĀNDHARVA VEDA and NĀṬYA VEDA which are attached to the Ṛgveda, Yajurveda, Sāmaveda and Atharvaṇaveda respectively. (*Vide*) Commentary—

यजुर्वेदस्योपवेदो धनुर्वेद उदाहृतः ।
ऋचोपवेद आयुः स्यात्साम्नो गान्धर्व उच्यते ॥
अथर्वणस्य भरतमिति वेदोपवेदकाः ।

(नीतिप्रका० व्या १-१६)

Dhanurveda is defined as follows :

खड्गविद्यादिकं यत्तु धनुर्वेदाङ्गकं हि तत् ।

(नीतिप्रका० व्या १-१८)

The present work NĪTIPRAKĀŚIKĀ of Vaiśampāyana is a good illustration of this branch of knowledge. Dhanurveda had its origin from Brahmā who revealed it first to Pṛthu, son of Vena, pleased with his good administration even in Kali age.

लक्षाध्यायान् जगौ ब्रह्मा राजशास्त्रे महामतिः ।
पंचाशच्च सहस्राणि रुद्रः संक्षिप्य चाब्रवीत् ॥

वेदव्यासस्तु भगवान् तत्संक्षिप्य महामतिः ।
शतत्रयाध्यायवर्ती नीतिं चक्रे महामते ॥

संक्षिप्तमायुर्विज्ञाय मर्त्यानां बुद्धिदोषतः ।
तल्लक्षणोद्देशमात्रं मया तत्र निवेद्यते ॥

(नीतिप्रका० १-२३, २७, २८)

This Upaveda as revealed by Brahmā consisted of one hundred thousand chapters. But foreseeing the mental and physical deterioration of the later generations, the subsequent writers on the subject simplified it to enable the people to comprehend it easily. Brahmā, Maheśvara, Skanda, Candra, Pracetas, Manu, Bṛhaspati, Śukra, Bhāradvāja, Vedavyāsa and Gauraśiras are the subsequent writers on the subject. Vaiśampāyana reduced this Upaveda to eight chapters (Adhyāyas). The first five Adhyāyas deal with the classification and definition of the various weapons and arms. The other three Adhyāyas deal with military strategy, recruitment of soldiers to the army, appointment of officers and their emoluments and the duties of kings.

NĪTIPRAKĀŚIKĀ is the title of the present work as designated by the author in the opening stanza. The term *nīti* in this context connotes a wider sense and it is probably meant to include *Rājanīti* dealing with politics and state administration and *Daṇḍanīti* dealing with military strategy. This work comes in the category of works like Kāmandakīya-Nītisāra and Kauṭilya-Arthaśāstra, Harihara-Caturaṅga, Saṅgrāma-Vijayodaya, etc. But, while these latter works deal either with military strategy or state politics or both, Nītiprakāśikā alone deals with the different varieties of weapons besides military and state administration. Agnipurāṇa also deals with certain varieties of weapons. But the classification and description of weapons given in this work are more definite and elaborate based on an accurate knowledge of the weapons which were used in ancient India.

More than 136 weapons are mentioned and described in this work and they are all classified under four groups or varieties, namely: (1) *Mukta*, (2) *Amukta*, (3) *Muktāmukta* and (4) *Mantra-mukta*. These four varieties are considered to be the four feet of the Dhanurveda personified.

मुक्तं चैव ह्यमुक्तं च मुक्तामुक्तमतः परम् ।
मन्त्रमुक्तं च चत्वारि धनुर्वेदपदानि वै ॥

(नीतिप्रका० २, ११)

But the Agnipurāṇa, which also deals with weapons, mentions the four divisions of the army, namely, *ratha*, *gaja*, *turaga* and *padāti* as the four feet of Dhanurveda and gives a different classification of the weapons consisting of five varieties.

चतुष्पादं धनुर्वेदं वदे पञ्चविधं द्विज ।
रथनागाश्वपत्तीनां योधांश्चाश्रित्य कीर्तितम् ॥

यन्त्रमुक्तं पाणिमुक्तं मुक्तसंधारितं तथा ।
अमुक्तं बाहुयुद्धं च पञ्चधा तत्प्रकीर्तितम् ॥

(अग्निपु० अ० २४९. श्लो० १, २)

Particulars regarding the identity of Vaiśampāyana, the author of the present work, are not available. This work is accompanied by a commentary called Nītiprakāśikā-Tattvavivṛti. The name of the commentator is Sītārāma of Kauṇḍinya family. He was the son of one Nañjuṇḍa, a name which is familiar in Mysore and some parts of Karnāṭaka.

This edition containing the text and commentary of Nītiprakāśikā is based respectively on the manuscripts described under D. Nos. 3875 and 3878 preserved in the Government Oriental Manuscripts Library, Madras.

Our thanks are due to Messrs. M. S. Vaidyanathan, T. H. Viswanathan, V. R. Kalyanasundaram and N. S. Ramanujam of this Library who rendered help in the publication of this work.

MADRAS-5, T. CHANDRASEKHARAN,
*17th December* 1952. *Curator.*

# अभिमुखम्

विदितमेवेदं सर्वेषां यन्नीतिप्रकाशिकाख्योऽयं ग्रन्थसंदर्भः ऋग्यजुःसामाथर्वानुषङ्गिणामायुर्वेदधनुर्वेदगन्धर्ववेदनाट्यवेदात्मकानां चतुर्णामुपवेदानामन्यतमे धनुर्वेदेऽन्तर्भवतीति । धनुर्वेदस्य चास्य चत्वार्यङ्गान्युपाङ्गानि च त्रयोदश ।

अत्रैव व्याख्याने I-18—

यजुर्वेदस्योपवेदः धनुर्वेद उदाहृतः ।
ऋचोपवेद आयुःस्यात् साम्नो गन्धर्व उच्यते ॥

अथर्वणस्य भरतमिति वेदोपवेदकाः ।
खड्गविद्यादिकं यत्तु धनुर्वेदाङ्गकं हि तत् ॥

स चायं धनुर्वेदः पाषण्डप्रचुरेऽप्यस्मिन् कलियुगे धर्ममनतिक्रम्य प्रजाः पालयते वेनवंश्याय पृथव उपदिश्यमानो दृश्यते । नीतिप्रकाशिकादिधनुर्वेदग्रन्थजातस्य मूलभूतः लक्षाध्यायात्मकः ब्रह्मकृतः कश्चनासीदिति ज्ञायते । तस्यातिविस्तृततामिदानीन्तनजनानां बुद्ध्यादिसंकोचं च समीक्ष्य महेश्वरप्रभृतयो ब्रह्मणोऽर्वाचीना आचार्याः संक्षिप्य प्रबन्धान् निर्ममिरे । क्रमेण संकुचितो धनुर्वेदः नीतिप्रकाशिकायां वैशम्पायनेन तल्लक्षणोद्देशमात्रकथनेनाष्टाध्यायतां नीतः ।

अत्रैव I-23, 27, 28—

लक्षाध्यायान् जगौ ब्रह्मा राजशास्त्रे महामतिः ।
पञ्चाशच्च सहस्राणि रुद्रः संक्षिप्य चाब्रवीत् ॥

वेदव्यासस्तु भगवान् तत्संक्षिप्य महामतिः ।
शतत्रयाध्यायवतीं नीतिं चक्रे महामते ॥

संक्षिप्तमायुर्विज्ञाय मर्त्यानां बुद्धिदोषतः ।
तल्लक्षणोद्देशमात्रं मया तव निवेद्यते ॥ इति ।

ब्रह्ममहेश्वरप्रभृतयः एकादशाचार्या धनुर्वेदस्य प्रवर्तकाः स्मर्यन्ते तेषां कृतयो नोपलभ्यन्ते । तत्परिगणनान्तर्भूतौ शुक्रबृहस्पती इदानीमुपलभ्यमानशुक्रनीतिबृहस्पतिसूत्रयोः प्रणेतारावेवेति निश्चयेन वक्तुं न शक्यते । कृतिद्वयस्य शुक्रबृहस्पतिकर्तृत्वेऽप्येतद्ग्रन्थोक्तसहस्राद्यध्यायपरिमितत्वस्याभावात् ।

नीतिप्रकाशिकायामध्यायपञ्चकेन षट्त्रिंशदधिकशतसंख्याकानामायुधानां लक्षणादिकमुच्यते । अनन्तराध्यायत्रिकं तु व्यूहनिर्माणादिकं सेनापतिनियमनादिकं च वर्णयति ।

दण्डनीतिपरत्वेनास्य ग्रन्थस्य दण्डनीतिप्रकाशिकेत्येतस्मिन्नर्थे नीतिप्रकाशिकेत्याख्यायत इति विभाव्यते । दण्डनीतिप्रकाशनपरेऽस्मिन् प्रबन्धे राजधर्मोपदेशस्तु राजनीतौ निष्णातानामेव दण्डनीतावधिकारसूचनामेवेति भाति ।

अत्रैव व्याख्यायां I-49.

धनुर्वेदाधिकारिणा राजनीतिमता भाव्यमिति मनसि निधाय ब्रह्मा पृथोः मुख्यान् राजधर्मानुपदिशति इति ।

कामन्दकीयनीतिशास्त्रकौटिल्यार्थशास्त्रादिराजनीतिप्रतिपादकानां हरिहरचतुरङ्गसङ्ग्रामविजयोदयादियुद्धशास्त्रप्रतिपादकानां ग्रन्थानां सत्वेऽपि धनुरादीनां लक्षणस्यावान्तरभेदादेश्च कथनेऽयमनितरसाधारणो विजयते । अग्निपुराणे धनुरादीनां केषांचिल्लक्षणकथनेऽप्यवान्तरभेदभिन्नानां तेषां विविच्य लक्षणादिकं नैतस्मिन्निव कथ्यते ।

मुक्त, अमुक्त, मुक्तामुक्त, मन्त्रमुक्त इति चतुर्धा भिन्नान्यायुधानि धनुर्वेदस्य चत्वारः पादाः इत्युच्यन्ते । अत्र विषयेऽस्यायुधानां पञ्चविधत्वं चतुरङ्गस्य पादत्वं च कथयतोऽग्निपुराणस्य च वैमत्यं दृश्यते ।

अत्र II-11.—

मुक्तं चैव ह्यमुक्तं च मुक्तामुक्तमतः परम् ।
मन्त्रमुक्तं च चत्वारि धनुर्वेदपदानि वै ॥

अग्निपुराणे 249 तमेऽध्याये 1 and 2.—

चतुष्पादं धनुर्वेदं वदे पञ्चविधं द्विज ।
रथनागाश्वपत्तीनां योधांश्चाश्रित्य कीर्तितम् ॥

यन्त्रमुक्तं पाणिमुक्तं मुक्तसंधारितं तथा ।
अमुक्तं बाहुयुद्धं च पञ्चधा तत्प्रकीर्तितम् ॥

अस्य च कर्ता वैशंपायनः । सुमन्तुजैमिन्यादिऋषिवर्गेऽन्तर्भूतस्य वैशंपायनस्य कर्तृत्वेऽस्यातिप्राचीनत्वं वेदसमीपकालत्वमपि वा वचनसिद्धम् । शैल्यादिकमपि तत् द्रढयति ।

अयं च धनुर्वेदोऽद्य तत्वविवृत्याख्यव्याख्यासंवलितः प्रकाश्यते । व्याख्याता चास्य कौण्डिन्यगोत्रजः नञ्जुण्डाख्यविद्वन्मणिपुत्रः सीतारामाभिधः कश्चित् । नञ्जुण्ड इति नाम्नः महीसुरपुरप्रान्ते बल्लारिप्रान्ते च बहुलतया दृश्यमानत्वात् सीतारामोऽयं महीसुरपुरवास्तव्य बल्लारीप्रान्तवास्तव्यो वेत्यूह्यते ।

अस्य मुद्रणविषये राजकीयप्राच्यविद्याहस्तलिखितपुस्तकभाण्डागारे D. No. 3875 संख्याङ्कितं मूलपुस्तकं तत्रैव, D. No. 3878 संख्याङ्कितं व्याख्यानपुस्तकं चादर्शतयोपयुक्तम् । उभयोरपि मातृकान्तराभावाद्यथाशक्ति परिशोध्य प्रकाश्यते ।

किञ्चास्य शोधनविषये साहाय्यं कृतवद्भ्यः श्रीयुत-वैद्यनाथविश्वनाथकल्याणसुन्दररामानुज-महाशयेभ्यः कृतज्ञता निवेद्यते ।

मद्रपुरी,

१७ दिसंबर, १९५२. ति. चन्द्रशेखरः.

श्रीः

# ॥ वैशम्पायननीतिप्रकाशिका ॥

सीतारामकृततत्वविवृतिसहिता

## प्रथमः सर्गः

(राजधर्मोपदेशः)

मू.---श्रीमद्गजाननं वाणीं नत्वा ब्रह्मादिसद्गुरून् ।
नीतिप्रकाशिका सेयं तन्यते सादरान्मया ॥ १ ॥

## तत्वविवृतिः

श्रीमज्जगन्नाथमादौ भक्त्या नत्वा यथामति ।
नीतिप्रकाशिकातत्वविवृतिं करवाण्यहम् ॥

दुर्वादिद्विरदेन्द्रकुम्भदलनाशक्तिस्ववाग्वैखरी-
हस्ताग्रादवलब्धमौक्तिकयशः सिंहः सुधीन्द्राग्रणीः ।
नञ्जुण्डाख्यबुधस्तदीयतनुजः सीतापदेनाश्रितो
रामः कौण्डिनगोत्रजः स कुरुते ग्रन्थं बुधान् प्रार्थयन् ॥

अथ तावद्भगवतो वेदव्यासस्यान्तेवासी वैशम्पायननामा महर्षिः कल्युत्पन्नराजानुजिघृक्षया सूक्ष्मनीतिबुभुत्सवे जनमेजयाय चतुर्मुख-पृथुसंवादरूपेण धनुर्वेदमुपदेष्टुं ग्रन्यादौ शिष्टनियमितप्रत्यूहापनोदनं मंगलमन्तेवासिशिक्षार्थं निबध्नाति श्रीमदित्यादिना ।

गजस्याननं यस्य सः । श्रीमांश्चासौ गजाननश्च । तं । वाणीं सकलविद्याधिदेवताम् । ब्रह्मा आदिर्येषां । ते च ते सद्गुरवश्च । नीतिदेशिकान् तांश्च नत्वा । नीतिप्रकाशिका तदाख्या कृतिः ॥ सा अनादिसिद्धा । इमां मद्बुद्धिस्थां । सादरात् जनमेजयानुग्रहवशात् मया वैशम्पायनेन तन्यते विस्तार्यते । तदुक्तं विक्रमार्कचरित्रे—

'श्रुत्वा वैशम्पायनमुखाद्धृष्टो जन्मेजयस्तदा ।
अष्टाध्यायवतीं नीतिं प्रावर्तयत तां तदा' ॥ इति ॥ १ ॥

मू.—श्रीमत्तक्षशिलायां तु सूपविष्टं वरासने ।
जनमेजयं महाराजं द्रष्टुकामो महातपाः ॥ २ ॥

व्या.—श्रीमत्यां तक्षशिलायां तदाख्यायां नगर्याम् । वरासने सिंहासने । सूपविष्टं सुखोपविष्टम् ॥ २ ॥

मू.—वैशम्पायननामा तु महर्षिः संशितव्रतः ।
अभ्यागात् सहितः शिष्यैः व्यासशिष्यो महामुनिः ॥ ३ ॥

व्या.—सम्यक् शितं तीक्ष्णं व्रतं यस्य सः संशितव्रतः। धर्मान् जानातीति मुनिः । अभ्यागात् । शिष्यैः स्वशिष्यैः सहितः । एतच्छ्लोकद्वयमेकं वाक्यम् ॥ ३ ॥

मू.—तमायान्तमृषिं श्रुत्वा जनमेजयभूपतिः ।
प्रत्युज्जगाम सहसा सह मन्त्रिपुरोहितैः ॥ ४ ॥

व्या.—प्रत्युज्जगाम अभ्युज्जगाम । मन्त्रिपुरोहितैः सह युक्तः इत्यर्थः ॥ ४ ॥

पाद्यमर्घ्यं तथा गाञ्च मधुपर्कं विधाय च ।
तस्मिन् प्रोवाच कुशलं प्रहृष्टेनान्तरात्मना ॥ ५ ॥

व्या.— गां पूजार्थम् । तेनानुपृष्ट इति शेषः । कुशलं स्वकुशलं स्वक्षेमं प्रोवाचाकथयत् । पूर्वं गुरोः कुशलं पृष्ट्वेति भावः । सद्गुरुदर्शनान्मनोहर्षः राज्ञः ॥ ५ ॥

मू.— धन्योऽस्म्यनुगृहीतोऽस्मि यन्मे दर्शनमागतः ।
तारिताः पितरः सर्वे पावितोऽहं त्वया मुने ॥ ६ ॥

व्या.—धन्यः धनार्हः । अनुगृहीतः ऐहिकामुष्मिकफलं प्रापितः । यत् यस्मात् कारणात् मे दर्शनं मद्दृष्टिगोचरतामागतः प्राप्तः ॥ तारिताः पापादुद्धारिताः । पावितः परिशुद्धीकृतः ॥ ६ ॥

मू.— इत्युक्तवन्तं राजानं प्रयुयोजाशिषः शुभाः ।
धर्मे ते रमतां बुद्धिरित्युक्त्वागात्सभां ततः ॥ ७ ॥

व्या.—राजानम् । उद्दिश्येति शेषः । 'धर्मे तव बुद्धी रमतां । आसक्ता भवतु' इत्याद्याशीःस्वरूपं । ततः प्रत्युद्गमनयोग्यप्रदेशात् । सभां तक्षशिलाख्यनगर्यां विद्यमानां राजसभामगात् प्राप्तः । राज्ञा सहेति शेषः ॥ ७ ॥

मू.—उपविष्टे मुनौ तस्मिन्भद्रपीठे नृपोत्तमः ।
परिवृत्त्यासनाभ्याशे कृताञ्जलिरुपाविशत् ॥ ८ ॥

व्या.—भद्रपीठे मुन्युपवेशार्थक्लृप्ताष्टकोणयुतमङ्गलपीठे । उपविष्टे सति । आसनाभ्याशे वैशम्पायनासनसमीपे । परिवृत्य मुनेरभिमुखं निवृत्य ॥ ८ ॥

मू.—कथान्तरमथासाद्य जनमेजयभूपतिः ।
प्रणम्य तमृषिं भक्त्या कृताञ्जलिरभाषत ॥ ९ ॥

व्या.—अथ सर्वोपवेशानन्तरं । कथानां वेदशास्त्रोक्तमहाराजप्रतिपादकानां कथानामन्तरमवकाशं विश्रान्तिकालमासाद्य स्वाभिलाषितप्रश्नावकाशं प्राप्य । भक्तिराराध्यत्वप्रकारकज्ञानरूपा तया । प्रणम्य जानुभ्यामवनिं गत्वा । अभाषत प्रश्नवाक्यमुपाक्रमतेत्यर्थः ॥ ९ ॥

मू.—राजधर्माः कथास्सर्वे भारतीयास्त्वयोदिताः ।
हृदि मे संशयः कश्चित्तं भवान् छेत्तुमर्हति ॥ १० ॥

व्या.—भारतीयाः महाभारतप्रतिपादिताः । त्वयोदिताः उदाहृताः । सर्वे वेदपुराणोक्ताश्च । भाविमनुष्यजीवनसन्देहयुक्तः संशयः । तं विरुद्धकोटिद्वयजातं । भवान् छेत्तुमर्हतीति योजना ॥ १० ॥

व्या.—कलिधर्मान् प्रपञ्चयति—इत इति ।

मू.—इतश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया ।
कालेन बलिना ब्रह्मन् क्षरत्यायुर्बलं स्मृतिः ॥ ११ ॥

व्या.—इतः इमं कालमवधीकृत्य । अनुदिनमुत्तरोत्तरदिवसेषु । अत्यन्तसंयोगे द्वितीया । बलिनाशक्यप्रतीकारेण । कालेनायुः परिभेदकर्त्रा । धर्मः इष्टापूर्तादिजन्यः । सत्यं यथार्थवचनम् । शौचमैहिकाचरणजन्य-

शुचित्वम् । क्षमा परापकारसहिष्णुता । दया परदुःखप्रहरणेच्छा । बलं देहदार्ढ्यम् । स्मृतिः पूर्वानुभवजन्या । क्षरति ह्रसति । उत्तरोत्तरं नश्यतीत्यर्थः ॥ ११ ॥

मू.—वित्तमेव कलौ नृणां जन्माचारगुणोदयः ।
धर्मन्यायव्यवस्थायां कारणं बलमेव हि ॥ १२ ॥

व्या.—जन्माचाराभ्यां यः गुणोदयः स वित्तमेव । द्रव्यानिमित्तक एव । धर्मेण क्रियमाणा य न्यायव्यवस्था तस्यां बलमेव प्रबलालम्बनरूपमेव कारणम् ॥ १२ ॥

मू.—दाम्पत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके ।
स्त्रीपुंस्त्वे कौशलरतिः विप्रत्वे सूत्रमेव च ॥ १३ ॥

व्या.—दाम्पत्ये जायापतिभावे । अभिरुचिस्सम्मतिः । न कुलगोत्रादि । व्यावहारिके क्रयविक्रयादौ मायैव कौटिल्यमेव । स्त्रीत्वे पुंस्त्वे च श्रैष्ठ्ये कौशलरतिः चातुर्यरुचिः । न तु स्वाचारः विप्रत्वे ब्राह्मण्ये । सूत्रमेव यज्ञोपवीतमेव । न त्वध्ययनाध्यापनादि ॥ १३ ॥

मू.—लिङ्गमेवाश्रमख्यातावन्योन्यापत्तिकारणम् ।
अवृत्त्या न्यायदौर्बल्यं पाण्डित्ये चापलं वचः ॥ १४ ॥

व्या.—आश्रमयोः गार्हस्थ्ययतीकयोः । ख्यातावन्योन्यापत्तावाश्रमाश्रमप्राप्तौ च कारणीभूतं लिङ्गमेव । शुभ्रकाषायवस्त्रधारणमेव । अवृत्त्या द्रविणादिदानासामर्थ्येन । न्यायदौर्बल्यम् । सभायामवक्तृत्वं पराजय इति भावः । पाण्डित्ये सदसद्वात्तित्वे चापलं वचः विशेषवचनाकथनम् ॥ १४ ॥

मू.—अनाढ्यतैव साधुत्वे स्नानमेव प्रसाधनम् ।
स्वीकार एव चोद्वाहे लावण्ये केशधारणम् ॥ १५ ॥

व्या.- साधुत्वेऽनाढ्यतैव दारिद्र्यमेव कारणम् । न त्वाढ्येषु साधुत्वमित्यर्थः । प्रसाधनमलङ्कारः स्नानमेव । सौवर्णाद्यभावात् ।

स्रातारोऽपि न भविष्यन्तीत्याशयः। उद्वाहे विवाहे स्वीकार एव सम्मतिरेव। न तु सांबन्ध्यविचार इत्यर्थः। लावण्ये विषये केशधारणम्। न तु दीक्षादिनिमित्तमित्यर्थः ॥ १५ ॥

मू.—उदरम्भरिता स्वार्थः यशोऽर्थं धर्मसेवनम्।
दाक्ष्यं कुटुम्बभरणे सत्यत्वे धार्ष्ट्यमेव हि ॥ १६ ॥

व्या.—स्वार्थः स्वप्रयाजनमुदरम्भरिता कुक्षिपूरणमेव। न त्वैहिकामुष्मिकम्। यशोऽर्थं लोकप्रसिद्ध्यर्थं। न त्वामुष्मिकेच्छयेति भावः। कुटुम्बभरण एव दाक्ष्यम् समर्थत्वं, न तु परोपकारादिषु। सत्यत्वे याथार्थ्ये धार्ष्ट्यमेव वाक्प्रयोगप्रौढिमैव। न तु कार्यन्याय इति भावः ॥ १६ ॥

मू.—शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु।
पाषण्डप्रचुरे धर्मे दस्युप्रायेषु राजसु ॥ १७ ॥

कथं तेषामियं नीतिर्विस्तृता वशमेष्यति।
धनुर्वेदविवेकश्च शस्त्रास्त्रज्ञानमेव च ॥ १८ ॥

व्या.—धर्मे पाषण्डप्रचुरे पाषण्डमात्रोपदेश्ये सति। राजसु दस्युप्रायेषु ईषन्न्यूनचोरवृत्तिषु। मार्गदुर्गादौ प्रत्यक्षप्रहारा भावादीषन्न्यूनत्वं राज्ञाम् ॥ १७ ॥ तेषां तादृशबुद्धिसंकोचवतां विस्तृता बहुप्रबन्धप्रतिपादिता मनस्सन्देहविषयेयं नीतिः। शिक्षा शास्त्रम्। कथं वशं बुद्ध्यधीनम्। एष्यति प्राप्नोति। धनुर्वेदविवेकः धनुर्विद्याधिदैवतध्यानप्रकारः। शस्यते हन्यते जनोऽनेनेति शस्त्रम्। अस्यते देहे परिक्षिप्यत इत्यस्त्रम्। तयोः अमन्त्रकप्रयोगसमन्त्रकप्रयोगवतोः ज्ञानं विवेक। ननु धनुर्वेदस्य किं पृथग्वेदत्वमिति चेन्न।

"यजुर्वेदस्योपवेदो धनुर्वेद उदाहृतः।
ऋचोपवेद आयुस्स्यात्साम्नो गान्धर्व उच्यते ॥

अथर्वणस्य भरतमिति वेदोपवेदकाः।
खड्गविद्यादिकं यत्तु धजुर्वेदाङ्गकं हि तद् ॥"

इति महोदधिसारवचनादुपवेदस्वीकारात् ॥ १८ ॥

मू.—इति तद्वचनं श्रुत्वा हृदयज्ञो महानृषिः ।
अर्थोपहितया वाचा राजानमिदमब्रवीत् ॥ १९ ॥

व्या.—हृदयज्ञो भावज्ञानवान् । अर्थोपहितया बह्वर्थयुक्तया ॥ १९ ॥

मू.—इङ्गितं ते मया ज्ञातं सूक्ष्मनीतिप्रबोधने ।
लब्धानुयोगः प्रब्रूयात् शास्त्रं नो चेदघी भवेत् ॥ २० ॥

व्या.—ते तव । इङ्गितमभिप्रायः । "पराभिप्राय इङ्गित" मित्यमरः । सूक्ष्मनीतिप्रबोधने संक्षिप्तशब्दबोध्याखिलनीतिज्ञानविषये । प्रश्नं विना शास्त्रकथने बाधकमाह—लब्धेत्यादिना । अनुयोगः प्रश्नः । "प्रश्नोऽनुयोगः पृच्छा च" त्यमरः । अघी भवेत् । "नापृष्टः कस्यचिद्ब्रूयाच्छुभं वा यदि चेतर" दिति निषेधशास्त्रोल्लङ्घनजन्यपापवान् भवेत् । अतोऽहं प्रब्रूयामिति शेषः ॥ २० ॥

व्या.—नीतिशास्त्रावबोधने स्वसामर्थ्याविष्करणाय नीतिशास्त्रकर्तॄन् तद्ग्रन्थाध्यायसंख्यां चाह—ब्रह्मेत्यादिना ।

ब्रह्मा महेश्वरः स्कन्दश्चेन्द्रः प्राचेतसो मनुः ।
बृहस्पतिश्च शुक्रश्च भारद्वाजो महातपाः ॥
वेदव्यासश्च भगवांस्तथा गौरशिरा मुनिः ।
एते हि राजशास्त्राणां प्रणेतारः परन्तपाः ॥ २१ ॥

व्या.—गौरशिरास्तन्नामकः । प्रणेतारः प्रवर्तकाः ॥ २१ ॥

मू.—लक्षाध्यायाञ्जगौ ब्रह्मा राजशास्त्रे महामतिः ।
पञ्चाशच्च सहस्राणि रुद्रस्संक्षिप्य चाब्रवीत् ॥ २२ ॥

पञ्चविंशत्सहास्राणि स्कन्दः संक्षिप्य चावदत् ।
दशाध्यायसहस्राणि द्विसहस्रे च वासवः ॥ २३ ॥

व्या.—जगौ उक्तवान् । राजशास्त्रेऽपारनीतिशास्त्रे ॥ २२ ॥ सक्षिप्य शब्दसंक्षेपं कृत्वा । स्कन्दः सुब्रह्मण्यः । चकारस्समुच्चयार्थकः, द्वादशसहस्राणित्यर्थः ॥ २३ ॥

मू.—प्राचेतसमुनिश्चापि षट्सहस्राण्यथाब्रवीत् ।
त्रीण्यध्यायसहस्राणि बृहस्पतिरुवाच ह ॥ २४ ॥

काव्यस्तु तत्समालोक्य चक्रेऽध्यायसहस्रकम् ।
सप्ताध्यायशतं शास्त्रं भारद्वाजस्तथाभणत् ॥ २५ ॥

मुनिर्गौरशिराश्चापि पञ्चाध्यायशतं जगौ ।
वेदव्यासस्तु भगवांस्तत्संक्षिप्य महामतिः ॥ २६ ॥

शतत्रयाध्यायवतीं नीतिं चक्रे महामतिः ।
संक्षिप्तमायुर्विज्ञाय मर्त्यानां बुद्धिदोषतः ॥ २७ ॥

व्या.—काव्यः शुक्रः । "शुक्रो दैत्यगुरुः काव्य" इत्यमरः । समालोक्य सम्यग्विचार्य । अध्यायानां शतं सप्त यस्मिन् तत् । सप्तशताध्यायवच्छास्त्रमित्यर्थः । अभणत् अदर्शयत् ॥ २४ ॥ २५ ॥ लक्षाध्यायप्रतिपादिताखिलार्थस्य शतत्रयाध्यायप्रतिपादनसामर्थ्यवत्वात् महामतित्वविशेषणं वेदव्यासस्य । संक्षिप्तमित्यादि सार्धश्लोकमेकं वाक्यम् । बुद्धिदोषतः । "अनभ्यासाच्च वेदानामाचारस्य च लङ्घनात् । आलस्यादन्नदोषाच्च मृत्युर्मर्त्याञ्जिघांसति" । इत्यादिशास्त्रानभिज्ञत्वरूपबुद्धिदोषात् । पञ्चम्यास्तसिः ॥ २६ ॥ २७ ॥

मू.—तल्लक्षणोद्देशमात्रं मया तव निवेद्यते ।
सावधानमना भूत्वा राजशास्त्रं निबोध मे ॥ २८ ॥

व्या.—तल्लक्षणं नीतिलक्षणं । उद्देशमात्रं निर्देश एव । विषयान्तरसञ्चारराहित्यरूपशिष्यावधारणाय राजानं स्वाभिमुखीकरोति । सावधानेत्यादिना । मे मत्तः ॥ २८ ॥

धनुर्वेदोपदेशयोग्यं पृथुं विशेषतो निर्दिशति—पृथुरित्यादिना—

मू—पृथुर्वैन्यः प्रजा रक्षन् मृत्युं जित्वा पुरा किल ।
क्षतत्राणात् प्रजास्तं तु क्षत्रियश्चाब्रुवंस्तथा ॥ २९ ॥

व्या.—वैन्यः वेनपुत्रः। मृत्युं जित्वा स्वधर्मेण निर्जित्य, पुरा प्रजा अरक्षत्। किलेति वार्तायाम्। क्षतत्राणान्मृत्योः सकाशात् परिपालनात् क्षात्रियमब्रुवन्। "क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो नृवरेषु रूढ" इति न्यायात् ॥ २९ ॥

मू.—नामापि तस्य राजेति प्रजारागादजायत ।
अकृष्टपच्या पृथिवी चासीद्वैन्यस्य कामधुक् ॥ ३० ॥

व्या.—प्रजासु रागादनुरागात्। राजेत्यपि नामाभवत्। वैन्यस्य पृथोः। पृथिव्यकृष्टपच्या कर्षणबीजावापादिकं विनापि फलप्रदायिनी। अत एव कामधुक् मनोऽनुरूपफलप्रदायिनी आसीदिति योजना ॥ ३० ॥

मू.—आसन् हिरण्मया दर्भास्सुखस्पर्शा मनोहराः ॥
तेषां चीरैस्सुसंवीताः प्रजास्तेष्वेव शेरते ॥ ३१ ॥

व्या.—तन्महिम्नात्याश्चर्याण्यपि जातानीत्याह—आसन्नित्यादिभिस्त्रिभिः। तेषां चीरैस्तत्कृतवल्कलैः ॥ ३१ ॥

मू.—प्रविभागो न राष्ट्राणां पुराणाञ्चाभवत्तदा ।
यत्र यत्र प्रजा आसन् तत्र दोग्ध्री मही सुखम् ॥ ३२ ॥
तेन संस्तम्भिता ह्यापः समुद्रमभियास्यता ।
पर्वताश्च ददुर्मार्गं ध्वजभङ्गश्च नाभवत् ॥ ३३ ॥

व्या.—ददुस्तस्येति शेषः ॥ ३२ ॥ ३३ ॥

मू.—षष्टिनागसहस्राणि षष्टिनागशतानि च ।
सौवर्णान्यकरोद्राजा ब्राह्मणेभ्यश्च तान्यदात् ॥ ३४ ॥

व्या.—नागाः गजाः। पर्वताः। अदात् षोडशदानानि कृतवानित्यर्थः। सौवर्णं सुवर्णखचितम् ॥ ३४ ॥

मू.—इमाञ्च पृथिवीं सर्वां मणिरत्नविभूषिताम् ।
सौवर्णामकरोद्राजा ब्राह्मणेभ्यश्च तां ददौ ॥ ३५ ॥
ताननन्यान् गुणान् बुद्ध्वा तस्य राज्ञश्चतुर्मुखः ।
आत्मानं दर्शयामास वरदोऽस्मीति चाब्रवीत् ॥ ३६ ॥

व्या.—बुद्ध्वा ध्यात्वा। आत्मानं दर्शयामासादर्शयत्। तमागच्छदिति भावः। ३६ ॥

मू.—ब्रह्माणश्च ततो दृष्ट्वा श्रुत्वा चैव स तद्वचः ।
पृथुः परमसंहृष्टो वव्रे तं वरमुत्तमम् ॥ ३७ ॥

व्या.—तद्वचः वरदोऽस्मीति स्वाभीष्टदायकवचनम् ॥ तं प्रसिद्धं ॥ ३७ ॥

मू.—चतुष्पाच्च धनुर्वेदः साङ्गोपाङ्गरहस्यकः ।
शस्त्रास्त्रभूषितो मह्यं प्रदेयस्तु त्वया भवेत् ॥ ३८ ॥

व्या.—चतुष्पात् मुक्तामुक्तमन्त्रमुक्तमुक्तामुक्तात्मकपादचतुष्टयवान् । पात् पादौ पाद इत्यस्य रूपं । अङ्गानि चत्वारि । लक्षणाणि तान्यग्रे वक्ष्यन्ते ॥ उपाङ्गानि शब्द-स्पर्श-गन्ध-रस-दूर-चलादर्शन पृष्ठस्थित-स्थिर-भ्रमण-प्रतिबिम्बोद्देश लक्ष्याख्यानि त्रयोदश ॥ तेषां क्रमेणोदाहरणानि ॥ दशरथकर्तृकमुनिकुमारक-अर्जुनकर्तृकद्रोणग्राहकमकरी-मन्मथकर्तृकपुष्पबाणकरणकविरहिजन - बभ्रुवाहनकर्तृकमध्वस्तकर्मक-अर्जुन-कर्तृकजयद्रथशिरोहरणपूर्वकवृद्ध-क्षत्रक - अर्जुनकर्तृकखेचरपक्षि - रामकर्तृक-पातालदानव-भूरिश्रवसो बाहु-शत्रुद्रुपदकृतमत्स्यतुलाप्रतिबिम्ब-मत्स्यभित्तिपत्र-भेदादीनि रहस्यानि तपोगुप्तानि । तैः सह वर्तत इति सांगोपांग-रहस्यकः । बहुव्रीहौ कप्रत्ययः । शस्त्रममन्त्रकप्रयोगः । अस्त्रं समन्त्रकप्रयोगः ॥ ३८ ॥

मू.—आत्मानं परमं मन्ये लोकेभ्यो लोकपूजित ।
यस्य मे दर्शनं प्राप्तो भवान्वेदमयो निधिः ॥ ३९ ॥

व्या.—लोकेभ्यः जनेभ्यः । आत्मानं मां निधिः निक्षेपवत्स-न्तोषकारी ॥ ३९ ॥

मू.—इत्युक्त्वानन्ददुग्धाब्धौ मज्जमानं पृथुं तदा ।
प्रोज्जहार जगत्स्रष्टा वाचाथ प्लवरूपया ॥ ४० ॥

व्या.—प्लवरूपया प्रस्तावकथायुक्तत्वेन मज्जनोद्धारतरिरूपं प्राप्तया ॥ ४० ॥

मू.—दिष्ट्या ते बुद्धिरुत्पन्ना धनुर्वेदपरिग्रहे ।
अहमप्येतदेव त्वां वक्तुकाम इहागतः ॥ ४१ ॥

व्या.—दिष्ट्या त्वत्कीर्तिसम्पादकादृष्टेन ॥ ४१ ॥

व्या.—खड्गस्य ब्रह्मसृष्टत्वेन भृशाश्वपुत्रत्वाभावादसिसृष्टिमादौ विविनक्ति ॥ असिरिति—

मू.—असिः पूर्वं मया सृष्टो दुष्टनिग्रहकारणात् ।
भवादृशसमीपस्थो लोकान् शिक्षञ्चरत्यसौ ॥ ४२ ॥

व्या.—पूर्वं देवयजनसमये शिक्षन्प्रजाः स्वस्वधर्मेण स्थापयन्नसाविदानीं तव समीपे वर्तमानः ॥ ४२ ॥

मू.—धनुराद्यायुधव्यक्तौ त्वमेवादिस्स्मृतो मया ।
तस्माच्छस्त्राणि चास्त्राणि ददामि तव पुत्रक ॥ ४३ ॥

व्या.—धनुरादीनामायुधानां व्यक्तौ लोकप्रचारणे त्वमेवादिरुपज्ञानत्वेन स्मृतः ध्यातः ॥ ४३ ॥

व्या.—शस्त्रज्ञानाय तेषां पितरं मातरञ्चाह—भृशाश्व इति ॥

मू.—भृशाश्वो मानसः पुत्रो द्वे जाये तस्य संमते ।
जया च सुप्रभा चैव दक्षकन्ये महामती ॥ ४४ ॥

व्या.—कृशाश्व इति पाठान्तरम् ॥ मानसो मन्मथसंकल्पजः । जया तन्नामिका, सुप्रभा तन्नाम्नी । दक्षप्रजापतिपुत्र्यौ । महामती । शस्त्रास्त्रप्रसवचातुर्यबुद्धियुक्ते । ४४ ॥

मू.—जया लब्धवरा मत्तः शस्त्राण्यस्त्राण्यसूत वै ॥
पञ्चाशदपरा चापि तावत्पुत्रानजीजनत् ॥ ४५ ॥

व्या.—भृशाश्वज्येष्ठा भार्या । लब्धवरा ऐच्छिकसृष्टिसामर्थ्य-प्राप्तिरूपवराश्रया । मत्तो मत्सकाशात् । अपरा कनीयसी सुप्रभा-नामिका सहधर्मिणी तावत् पञ्चाशत्संख्याकान् पुत्रानजीजनत् असूत ॥ ४५ ॥

मू.—संहारान्नाम दुर्धर्षान् दुराक्रामान् बलीयसः ।
मन्त्रदैवतसंयोगाच्छस्त्राण्यस्त्रत्वमाप्नुवन् ॥ ४६ ॥

व्या.—संहाराञ्छत्रुमुक्तास्त्रशामकान् ॥ तदुक्तं मन्त्रमहोदधौ—

" स्वमुक्तास्त्रस्य स्वायत्तीकरणं मुष्टिरुच्यते ।
परोन्मुक्तास्त्रशमनमुपसंहार ईरितः " ॥ इति ॥

दुर्धर्षान्प्रधर्षयितुमशक्यान् ॥ दुराक्रामानस्त्रानभिभूतान् ॥ बलीयसोऽस्त्रोपशमनबलयुक्तान् ।

ननु वज्रशक्त्यादीनामपि शस्त्राणामस्त्रसामर्थ्यस्य दृष्टत्वात्पृथगस्त्रग्रहणं व्यर्थमित्याशङ्क्य शस्त्रास्त्रयोर्वैलक्षण्ये युक्तिमाह—मन्त्रेति । मन्त्रप्रतिपादितदैवतसंयोगात् सामीप्यमहिम्नास्त्रत्वम् । तत्सामर्थ्यं न तु स्वतः सिद्धम् । अत एव तृणादीनामपि दम्भोद्भवादिनिग्रहसामर्थ्यं दृष्टम् । न बल्बजतृणानि शस्त्राणीति तयोर्भेदः ॥ ४६ ॥

मू.—मत्सकाशाद्धनुर्वेदं प्रगृह्य जयतां वर ।
धनुर्वेदग्रहणे प्रयोजनमाह—
सर्वाः पालय धर्मेण प्रजाः पुत्रानिवौरसान् ॥ ४७ ॥

धनुर्वेदाधिकारिणा राजनीतिमता भाव्यमिति मनसि निधाय ब्रह्मा पृथोः मुख्यान् राजधर्मानुपदिशाति सन्धिविग्रहेत्यादिना—

मू.—सन्धिविग्रहतत्त्वज्ञस्त्वनुमानविभागवित् ।
षाड्गुण्यविधियुक्तश्च सर्वशास्त्रविशारदः ॥ ४८ ॥

वृतो राजगुणैष्षड्भिस्सप्तोपायांस्तदाचर ।
बलाबलेन सम्यक्त्वं समीक्षस्व चतुर्दश ॥ ४९ ॥

व्या.—सन्धिः साम । विग्रहो निग्रहः । दण्ड इत्यर्थः । तयोस्तत्त्वज्ञस्तत्तत्कालप्रयोगविवेकवान् । भवेति सर्वत्र शेषः । अनुमानविभागवित् स्वपरशक्तिबलाबले अनुमानविभागवित् । निश्चित्य विभागो विभजनं । परामात्यादिभ्यो धनप्रदानं तद्वत् । अनुमाय विभागविदिति पाठान्तरम् । एवञ्च नीतिशास्त्रप्रसिद्धोपायचतुष्टयाभिज्ञत्वमुक्तम् । षाड्गुण्यविधियुक्तश्च । षड्गुणाः सन्धि विग्रह-यान सन-द्वैधीभाव समाश्रयाख्याः । त एव षाड्गुण्यं स्वार्थे ष्यञ् । तस्य विधिरज्ञातावबोधनम् । तेन युक्तः । तत्र सन्धिविग्रहौ प्रत्येकं द्विविधौ ।

प्रबलदुर्बलयोर्विजिगीषावतोः समभूमौ युद्धप्रसङ्ग आद्यो विग्रहमिच्छति। इतरस्तु तेन सहाल्पतरग्रहेणापि सन्धिमेवेच्छति। तथा च दुर्बलद्वारकौ सन्धिविग्रहावन्यौ। प्रबलद्वारकावन्यौ। तदिदमुक्तं रामायणे "द्वियोनी सन्धिविग्रहा"विति। तत्र प्रबलयोनिर्विग्रहो यानासनयोः प्रयोजकः। दुर्बलयोनिस्सन्धिः। द्वैधीभावसमाश्रययोः। यथोक्तं कामन्दकीये—

"सन्धेश्च विग्रहस्यापि द्वैगुण्यं सम्प्रचक्षते।
यानासने विग्रहस्य रूपं सन्धेः परं द्वयम्" इति॥

द्वौ गुणभूतौ यस्य सः द्विगुणः। सच सच तौ। तयोः भावः द्वैगुण्यम्। तत्र यानं विजिगीषोरारिं प्रति यात्रा। आसनं कदाचिच्छक्तिप्रतिबन्धे तत्रैव शत्रोर्दुर्गमावेष्ट्य तत्र धान्यादिप्रवेशनं प्रतिबध्नतावस्थानम्। बलवता विग्रहे बलवत्तरेण तच्छत्रुणा सन्धिं कृत्वोभयत्र दासोऽस्मीति वाचैवात्मसमर्पणं कर्तव्यं न कर्मणेति द्वैधीभावः॥ यथोक्तं कामन्दकीये—

"बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन्।
द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः"॥ इति॥

अरिणा पीड्यमानस्य बलवद्दुर्गभूपालाद्याश्रयणं समाश्रयः। सर्वशास्त्रविशारदः षट्छास्त्रनिपुणः। "पाणिने (?) त्यादि शास्त्रषट्कमुदाहृत"मिति शौनकवचनात्। षड्भिः राजगुणैर्वृतो युक्तः।

"वक्ता प्रगल्भो मेधावी स्मृतिमान्नयवित्कविः।
परावरविभागज्ञः प्रमाणकृतनिश्चयः"॥

इति नारदस्तुतावुक्ता वेदितव्याः। न केवलं ज्ञातुमेव कुशलोऽपि तु वक्तुमपीत्याह-- वक्तेति। समानाधिकरण एवेत्याह— प्रगल्भ इति। असम्बद्धप्रलापी नेत्यर्थः। यतो मेधावी ऊहापोहकुशलः। तादृशोऽपि स्मृतिमानधीतं न नाशितवानित्यर्थः। नयवित् दायविभागादिव्यवहारवित्। कविरनागतदर्शी। वक्तृत्वप्रगल्भत्व मेधावित्व-स्मृतिमत्त्व-नयवित्त्व-कवित्वाख्याः षड्गुणाः। परावरविभागज्ञो ज्ञानकाण्डकर्मकाण्डयोः यथायोग्यं शिष्येषु विभाजनज्ञः। यतः प्रमाणकृतनिश्चयः।

प्रमाणं प्रत्यक्षानुमानागमादि । तच्च द्विविधम् । लौकिकमलौकिकश्चेति । आद्यं घटवह्निस्वर्णादिविषयम् । द्वितीयं निर्विशेषात्मवस्तुतत्त्वविषयम् । अत्र श्लोके राजगुणेषु वक्तृत्वं, चारामात्यादिषु यथायोग्यं कार्योपदेशकौशलम् । प्रागल्भ्यं शत्रुदमनादावुत्कर्षप्रदर्शनम् । मेधावित्वं तर्ककौशलम् । स्मृतिमान् कविरित्यतीतानागतयोः परामर्शित्वम् । नयविदिति नीतिशास्त्रवित्त्वम् । एतैः राजगुणैः । उपायान् बलाबलं । अन्यान् । चतुर्दश । त्वं समीक्षस्वेति योजना । चतुर्दशभी राजदोषैर्विरहितो भव ॥ ते च वक्ष्यन्ते ॥

"नास्तिक्यमनृतं क्रोधः प्रमादो दीर्घसूत्रता ।
अदर्शनं ज्ञानवतामालस्यं पञ्चवृत्तिता ।
एकचिन्तनमर्थानामनर्थज्ञैश्च चिन्तनम् ।
निश्चितानामनारम्भो मन्त्रस्यापरिरक्षणम् ।
मङ्गलाद्यप्रयोगश्च प्रत्युत्थानश्च सर्वशः ।
कच्चित्त्वं वर्जयस्येतान् राजदोषांश्चतुर्दश ।"

इति रामायणोक्ताः । नास्तिक्यं परलोकापलापः । प्रमादोऽनवधानता । दीर्घसूत्रता चिरक्रियत्वम् । पञ्चवृत्तिता पञ्चेन्द्रियपरवशता । अर्थानां प्रयोजनानामेकचिन्तनम् एकेनैव चिन्तनम् अनर्थज्ञैर्विपरीतार्थदर्शिभिस्सह चिन्तनं मन्त्रः । मङ्गलमुत्सवः । आदिपदाद्देवपूजादि तस्याप्रयोगोऽननुष्ठानम् । प्रत्युत्थानश्च सर्वशः । युगपत्सर्वदिगवस्थितशत्रूद्देशेन दण्डयात्रेति तदर्थः । अत्र चकाराद्विंशतिवर्गरहितोऽपि भवेत्यर्थः । विंशतिवर्गस्तु कामन्दकीय उक्तः ॥

बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः ।
भीरुको भीरुजनको लुब्धो लुब्धजनस्तथा ॥

विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् ।
अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः ॥

दैवोपहतकश्चैव दैवचिन्तक एव च ।
दुर्भिक्षव्यसनोपेतः स्वलव्यसनसङ्कुलः ॥

अदेशस्थोऽबहुरिपुर्युक्तोऽकालेन यश्च सः ।
सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥

एतैस्सन्धिं न कुर्वीत निग्रहस्स्यात्तु केवल''मिति ॥

सप्तोपायाः साम दान-भेद-दण्ड मन्त्रौ-षधीन्द्रजालाख्याः बलाबलं स्वपरपक्षयोस्साम्यम् । परस्य हीनता स्वस्य वा हीनतेति । त्रिविधं यथायोग्यं बुद्धयादिभिः सामादयः परीक्षणीयाः । किमनेन शत्रुणा साम कर्तव्यं न वा?, कर्तुमारब्धश्चेत्सिद्धयति न वा, सिद्धश्चेदन्ते कुशलं न वेति चारप्रेषणादिना बलाबलप्रभृतिकं परीक्षणीयम् । तथा चतुर्दशदेशादयोऽपि परीक्षणीयाः ॥

ते च नीतिशास्त्रोक्ताः—

"देशो दुर्गं रथो हस्ती वाजी योधाधिकारिणः ।
अन्तःपुरान्तगणना शास्त्र-लेख्य धना-सवाः ।
परीक्ष्या ह्यधिपास्तेषां चतुर्दश नरेश्वरैः" ॥ इति ॥

योधाः अधिकारिणः देशपाल-दुर्गपाल-सेनापत्यादयः । गणनाश्वरथधनादीनां संख्या । लेख्यमायव्ययनिर्णयाय सर्वस्य पत्रारोहकरणम् । धनं पर्याप्तमपर्याप्तञ्चेति विचार्यम् । आसवाः मद्यवदपकारिणः । प्रच्छन्नशात्रवः । आसव इति पाठे बलमित्यर्थः ॥ ४८, ४९ ॥

मू.—अथ स्वात्मानमन्वीक्ष्य परांश्च रिपुसूदन ।
तथा सन्धाय कर्माणि सेवस्वाष्टौ सदा नृप ॥ ५० ॥

व्या.—अथात्मानं बलिनं परान्दुर्बलान्परीक्ष्य सेवस्व राज्यमिति शेषः । तथा विपरीते जयमूलस्य कोशस्य वृद्धये सन्धाय परैस्सह साम कृत्वा । अष्टौ कर्माणि—

कृषिर्वणिक्पथो दुर्गं सेतुकुञ्जरबन्धनम् ।
खन्याकरः करादानं शून्यानाञ्च निवेशनम् ।
अष्टौ सन्धानकर्माणि प्रयुक्तानि मनीषिभिः ॥ इति ॥

कुञ्जरबन्धनं बहुभक्षकत्वात्तेषां यथाविभागं ग्रामीणधनिकैरेव ग्रामे ग्रामे पोषणार्थं बन्धनम् । खनिः रत्नाद्युत्पत्तिस्थानम् । आकरः सुवर्णाद्युत्पत्तिस्थानम् । खननमात्रेण धमनादिनाभिमुखीकरणेन च तयोस्तल्लाभहेतुत्वात् ॥ ५० ॥

मू.—भवानष्टादशान्येषु स्वपक्षे दश पञ्च च ।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥ ५१ ॥

व्या.—भवानिति ॥ तीर्थानि मन्त्रिप्रभृतीरष्टादश ॥ यान्यवगाह्य राजा कृतकृत्यो भवति तानि चोक्तानि नीतिशास्त्रे—

मन्त्री पुरोहितश्चैव युवराजश्च भूपतिः ।
पञ्चमो द्वारपालश्च षष्ठोऽन्तर्वंशिकस्तथा ।
कारागाराधिकारी च द्रव्यसञ्चयकृत्तथा ।
कृत्याकृत्येषु चार्थानां नवमो विनियोजकः ।
प्रदेष्टा नगराध्यक्षः कार्यनिर्माणकृत्तथा ।
धर्माध्यक्षः सभाध्यक्षो दण्डपालस्त्रिपञ्चमः ।
षोडशो दुर्गपालश्च तथा राष्ट्रान्तपालकः ।
अटवीपालकान्तानि तीर्थान्यष्टादशैव तु ।
चारैर्विचारयेत्तीर्थानात्मनश्च परस्य च ।
पाषण्डादीनविज्ञातानन्योन्यमितरेष्वपि ।
मन्त्रिणं युवराजञ्च हित्वा स्वेषु पुरोहितम् ॥ इति ॥

एषां तीर्थशब्दवाच्यत्वे हलायुधः—

योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि ।
पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि ।

परेषामष्टादशसु स्वस्य मन्त्रिपुरोहितयुवराजवर्जं पञ्चदशसु च तीर्थेषु । चारानन्यैः परस्परञ्चाविज्ञातान् त्रींस्त्रीन्प्रयुज्य तत्र तत्रत्यां वार्तां सर्वचारसंवादे तथ्यां जानीयात् । ज्ञात्वा च स्वप्रजानामनुरञ्जनेन परप्रजानां दुःखितानामभयदानेन धनादिदानेनाकर्षणेन च स्वराष्ट्रं वर्धयेदित्युक्तं भवति ॥ ५१ ॥

एवं विजेतुं प्रकृतिसम्पदमुक्त्वा विजयकालमाह—तथा व्यसनिनमिति—

मू.—तथा व्यसनिनं शत्रुं निशम्य नृपसत्तम ।
अभियाहि जवेनैव समीक्ष्य त्रिविधं बलम् ॥ ९२ ॥

व्या.—व्यसनानि ।

"स्त्री द्यूतं मृगया मद्यं नृत्यं गीतं तथाटनम् ।
वाद्यं निन्दा दिवास्वापो व्यसनानि नृणां दशे" त्युक्तैर्युक्तम् ।

त्रिविधं बलं । मन्त्र कोश-भृत्यबलानि प्रभुमन्त्रोत्साहशक्तिर्वा । समीक्ष्य स्वबुद्ध्या विचार्य । अभियाहि यात्रां कुर्वित्यर्थः ॥ ९२ ॥

मू.—धृत्वा यात्रामारभस्व प्राप्तकालमरिन्दम ।
पार्ष्णिमूलञ्च विज्ञाय व्यवसायं पराजयम् ॥ ९३ ॥

व्या.—पार्ष्णिमूलं पार्ष्णिग्राहक आदिर्यस्य तद्द्वादशविधं मण्डलम् । तच्चोक्तं कामन्दकीये—

अमात्यराष्ट्रदुर्गाणि कोशो दण्डश्च पञ्चमः ।
एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः ॥

सम्पन्नस्तु प्रकृतिभिर्महोत्साहः कृतश्रमः ।
जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः ॥

अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् ।
अथारिमित्रं मित्रञ्च विजिगीषोः पुरस्कृताः ॥

पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरः ।
आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः ॥

अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः ।
अनुग्रहे संहतयोर्व्यस्तयोर्निग्रहे प्रभुः ॥

मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः ।
अनुग्रहे संहतानां, व्यस्तानाञ्च वधे प्रभुः ॥ इति ॥

इति । विजिगीषुः शत्रुः तयोर्मित्रे तन्मित्रे इति त्रीणि द्वन्द्वानि । क्रमेण पुरतः विजिगीषोः पृष्ठतः पार्ष्णिग्राहाक्रन्दौ । पार्ष्णिग्रहः पृष्ठरक्षकः । आक्रन्दः प्रोत्साहकः । एतयोरनुग्राहकावासारौ । तत्तत्पृष्ठगतौ पार्ष्णिग्रहसार आक्रन्दासारश्चेति दश पुरुषाः विजिगीषोः शत्रोः पार्श्वे । मध्यमः सर्वेषां पार्श्वे उदासीन इति मण्डलम् । पार्ष्णिमूलमित्युच्यते । व्यवसायं कृत्यनिश्चयम् । कृत्यश्च ।

अलब्धवेतनो लुब्धो मानी चाप्यपमानितः ।
क्षुद्रश्च कोपितोऽकस्मात्तथा भीतश्च भीषितः ॥

यथाभिलषितैः कार्यैर्भिन्द्यादेतांश्चतुर्विधान् ।
परकीयान् स्वकीयांस्तु रक्षेद्विजयकामुकः ॥

इति नीतिशास्त्रोक्तेः । पराजयं पराजयमूलानां व्यसनानां परपक्षे सद्भावं स्वपक्षे चाभावं विज्ञाय दिष्ट्याऽविशेषतो दैवज्ञादिद्वारा ज्ञात्वा । तत्र दैवं व्यसनं पञ्चविधम् । मानुषं पञ्चविधम् ।

यथोक्तं कामन्दकीये—

हुताशनो जलं व्याधिर्दुर्भिक्षं मारकस्तथा ।
इति पञ्चविधं दैवं व्यसनं मानुषं परम् ॥

अयुक्तेभ्यश्च चोरेभ्यः परेभ्यो राजवल्लभात् ।
पृथिवीपतिलोभाच्च प्रजानां पञ्चधा भयम् ॥ इति ॥

मारः माहेश्वरीमायादिरूपः ॥ ९३ ॥

मू.—स्वमूलं तु दृढं कृत्वा परान्याहि विशां पते ।
विक्रमस्व विजेतुं तांजित्वा च परिपालय ॥ ९४ ॥

व्या.—स्वमूलं स्वराज्यं । दृढं दृढप्रत्ययिभिः शूरैराधिष्ठितम् । परानभिभाव्यं कृत्वा । परान् याहि प्राप्नुहि । तांश्च विनेतुं विक्रमस्व प्रयत्नवान् भव । तान् जित्वा वशगान् कृत्वा । परिपालय अन्नवस्त्रादिदानेन स्वाधीनान् कुरु । न तु तेषां स्वतन्त्राधिकारं देहीत्यर्थः ॥ ९४ ॥

मू.—दृढमष्टाङ्गसंयुक्ता चतुर्विधबला चमूः ।
बलमुख्यैस्सुनीता ते द्विषतां प्रतिवर्धिनी ॥ ९५ ॥

व्या.—अष्टाङ्गसंयुक्ता—

यथा नागा हया योधाः पत्तयः कर्मकारकाः ।
चारा दैशिकमुख्याश्च ध्वजिन्यष्टाङ्गिता मता ॥

चतुर्विधबला मौल-वैत्र-भृत्याटविकैर्बलैर्युक्ता । बलमुख्यैस्सेनापतिभिस्सुनीता सम्यक्प्रापिता शिक्षिता वा । तव चमूः द्विषतां त्वच्छत्रूणां । प्रतिवर्धिनी प्रातिकूल्येन भेदिनी । दृढं भवतीति शेषः ॥ ९५ ॥

मू.—इत्येवमनुशास्यैवं ब्रह्मा लोकगुरुः पुनः ।
धनुर्वेदं ग्राहयितुं वक्तुमेवोपचक्रमे ॥ ५६ ॥

। इति वैशम्पायननीतिप्रकाशिकायां सङ्गतिप्रदर्शनपूर्वक-
राजधर्मोपदेशो नाम प्रथमस्सर्गः ।

व्या.— इत्येवमितिप्रकारेण । अनुशास्य शिक्षयित्वा । तद्योग्यधर्माननुपदिश्येत्यर्थः । एवं पृथुं धनुर्वेदं शस्त्रविद्यां । ग्राहयितुं प्रापयितुम् । पुनरपि वक्तुं धनुर्वेदं वेदस्वरूपं तन्मन्त्रं च कथयितुं । उपचक्रमे लोकगुरुः । परमकारुणिकतया लोकप्रवर्तनाय स्वदर्शनजनितसन्तोषपरवशतयावस्थितं पृथुं बुभुत्सुं स्वयमेव मत्वा तेनाऽपृष्टोऽपि रहस्यं कथयतीति वेदितव्यं सुधीभिरिति ॥

॥ इति श्रीसीतारामकृतायां नीतिप्रकाशिकातत्वविवृतौ
प्रथमः सर्गः ॥

## अथ द्वितीयस्सर्गः

(धनुर्वेदविवेककथनम्)

मू.—चतुष्पाच्च धनुर्वेदो रक्तवर्णश्चतुर्मुखः ।
अष्टबाहुस्त्रिणेत्रश्च साङ्ख्यायनसगोत्रवान् ॥ १ ॥

व्या.—चतुष्पाच्चेत्यादि ॥ धनुर्वेदपुरुषध्यानप्रकारं दर्शयितुं तदाकारमाह । चतुष्पात्पादचतुष्टयवान् । रक्तवर्णो जातरूपसदृशरक्तः । चतुर्मुखः मण्डलाकारेण कण्ठलग्नमुखचतुष्टयं धृतवान् । सांख्यायनसगोत्रवान् साङ्ख्यायनो ब्रह्मा तत्समानं गोत्रं यस्य सः ॥ तन्मानसपुत्रत्वात्तद्गोत्रः । तथा च निरुक्तौ

सङ्ख्या परार्धपर्यन्ता तदयं साङ्ख्य उच्यते ।
अयनं तस्य यस्मात्तत् ब्रह्मा साङ्ख्यायनस्स्मृतः ॥

इति ॥ १ ॥

मू.—वज्रं खड्गो धनुश्चक्रं दक्षबाहुचतुष्टये ।
शतघ्नी च गदाशूलपट्टिशा वामबाहुषु ॥ २ ॥

व्या.—दक्षो दक्षिणः । वामेतरः । "पुण्यकर्मा दक्षो वै दक्षिणश्च सः" इति भारविः ॥ २ ॥

मू.—प्रयोगकोटीरयुतो नीत्यङ्गो मन्त्रकञ्चुकः ।
उपसंहारहृदयः शस्त्रास्त्रोभयकुण्डलः ॥ ३ ॥

अनेकवल्गिताकारभूषणः पिङ्गलेक्षणः ।
जयमालापरिवृतो वृषारूढस्स उच्यते ॥ ४ ॥

व्या.—प्रयोग आयुधप्रयोग एव । कोटीरं किरीटम् । तेन युतः । नीतिशास्त्रमेवाङ्गानि राजशास्त्रम् यस्य । मन्त्राः चिन्तनं गायत्र्यादिमन्त्रा वा कञ्चुकं कवचं यस्य । उपसंहार एव हृदयम्मनो यस्य ।

शस्त्रास्त्र एवोभयकुण्डले कर्णोभयपार्श्वलम्बिनी यस्य सः। अनेकवाल्गितानि शस्त्राभ्यासाः तदाकाराणि तत्स्वरूपाणि भूषणानि यस्य। पिङ्गलेक्षणो हरितनेत्रद्वयवान्। ललाटनेत्रान्ते रक्तवर्णः। जयः शत्रुपराजयलब्धमहिमा। स एव माला तया परिवृतः ॥ ४ ॥

मू· एतं मन्त्रं प्रवक्ष्यामि वैरिजालनिकृन्तनम्।
आत्मसैन्यस्वपक्षाणामात्मनश्चाभिरक्षकम् ॥ ५ ॥

व्या.—एतं मन्त्रमेतद्देवताकमन्त्रम् ॥ ५ ॥

मन्त्रोद्धारमाहादावित्यादि—

मू.—आदौ प्रणवमुच्चार्य नम इत्यक्षरे ततः।
वर्तेति भगपूर्वं तु धनुर्वेदाय चोच्चरेत् ॥ ६ ॥

व्या·—भगपूर्वम्। भग इत्यक्षरद्वयपूर्वकम्। वतेति परं। भगवत इत्यर्थः ॥ ६ ॥

मू.—मां रक्ष रक्षेत्युच्चार्य मम शत्रूनथो वदेत्।
भक्षयेति द्विरुच्चार्य हुंफट् स्वाहेत्यथोच्चरेत् ॥ ७ ॥

व्या.—अथो अन्त्यभागे ॥ ७ ॥

मू.—अहमेव ऋषिश्चास्य गायत्री छन्द उच्यते।
महेश्वरो देवतास्य विनियोगोऽरिनिग्रहे ॥ ८ ॥

व्या.—अहमेव ब्रह्मैव ॥ ८ ॥

मू.—द्वात्रिंशद्वर्णकमनुं वर्णसंख्यासहस्रकैः।
जपित्वा सिद्धिमाप्नोति रिपूंश्चाप्यधितिष्ठति ॥ ९ ॥

व्या.—मनुं मूलमन्त्रम्। वर्णसङ्ख्यासहस्रकैः। मान्त्राक्षरवृत्ति द्वात्रिंशत्सहस्रैः इत्यर्थः ॥ ९ ॥

मू.—सत्यं सत्यं पुनस्सत्यं त्रिर्वदामीह वेनज।
धनुर्वेदस्य विवृतिमथाख्यास्ये निबोध मे ॥ १० ॥

व्या·—विवृतिं विवरणम्। निबोधावेहि।

"ओं भगवते धनुर्वेदाय मां रक्ष रक्ष मम शत्रुं बन्धय भक्षय हुं फट् स्वाहा" इति मन्त्रप्रकारः ॥ १० ॥

शस्त्रास्त्रस्वरूपधनुर्वेदस्य पादचतुष्टयमाह—मुक्तमित्यादिना—

मू.—मुक्तश्चैव ह्यमुक्तश्च मुक्तामुक्तमतः परम् ।
मन्त्रमुक्तश्च चत्वारि धनुर्वेदपदानि वै ॥ ११ ॥

व्या.—मुक्तं हस्तमुक्तमायुधजातम् । अमुक्तं हस्त एव तिष्ठच्छत्रुमारकम् । मुक्तश्च तदमुक्तश्च मुक्तामुक्तम् । सोपसंहारमस्त्रम् । मन्त्रैर्मुक्तमुपसंहाररहितं मन्त्रमुक्तमिति शेषः ॥ ११ ॥

मू.—मुक्तं बाणादि विज्ञेयं खड्गादिकममुक्तकम् ।
सोपसंहारमस्त्रं तु मुक्तामुक्तमुदाहृतम् ॥ १२ ॥
उपसंहाररहितं मन्त्रमुक्तमिहोच्यते ।
चतुर्भिरेभिः पादैस्तु धनुर्वेदः प्रकाशते ॥ १३ ॥

व्या.—तस्यैव विवरणं मुक्तमित्यादि द्वाभ्याम् ॥ १२, १३ ॥

मू.—शस्त्रमस्त्रश्च प्रत्यस्त्रं परमास्त्रमितीव च ।
चातुर्विध्यं धनुर्वेदे केचिदाहुर्धनुर्विदः ॥ १४ ॥

व्या.—पादचातुर्विध्ये मतान्तराण्याह शस्त्रमित्यादिना । प्रत्यस्त्रं निवारकास्त्रम् ॥ परमास्त्रं ब्रह्मास्त्रादि ॥ १४ ॥

मू.—आदानश्चैव सन्धानं विमोक्षस्संहृतिस्तथा ।
धनुर्वेदश्चतुर्धेति वदन्तीति परे जगुः ॥ १५ ॥

व्या.—आदानं ग्रहणम् । सन्धानं प्रयोगः । विमोक्षः मोचनम् । संहृतिस्संहारः ॥ १५ ॥

मू.—तत्राद्यं मतमालम्ब्य मुक्तामुक्तायुधान्यहम् ।
द्वात्रिंशद्भेदतो वच्मि तत्रायं विस्तृतिक्रमः ॥ १६ ॥

व्या.—द्वात्रिंशद्भेदतो विद्यमानानीत्यर्थः । विस्तृतिः प्रपञ्चः ॥ १६ ॥

मू.—धनुरिषुर्भिण्डिपालश्शक्तिद्रुघणतोमराः ।
नालिका लगुडाः पाशश्चक्रं वै दन्तकण्टकः ॥ १७ ॥

भुशुण्डीति द्वादशैते मुक्तभेदाः प्रकीर्तिताः ।
धनुर्वेदस्याद्यपादस्तवायं कथितो नृप ॥ १८ ॥

व्या.—धन्यते प्रार्थ्यते शूरैरिति धनुः । धन ध्याने । इष्यते इच्छाविषयः क्रियत इति इषुः । इष इच्छायां । भिण्डिमस्त्रधारणं वलयति श्लथयतीति भिण्डिवालः । शत्रूनर्दयतीति शक्तिः । द्रुः वृक्षो हन्यतेऽनेनेति द्रुघणः। एवमग्रेऽप्यायुधवाचकशब्देषु व्युत्पत्तिरूह्या । द्वात्रिंशदायुधविवरणमग्रे वक्ष्यते । दन्तकण्टकस्तन्नामकायुधविशेषः । इति पूर्वोदाहृतप्रकारेण मुक्तभेदा मुक्तनामकधनुर्वेदाद्यपादप्रतिपादितद्वादशायुधविशेषाः ॥ १८ ॥

धनुर्वेदद्वितीयपादप्रतिपादितविंशतिविधायुधानां नामानि क्रमेण कथ्यन्ते । वज्रमित्यादिश्लोकद्वयेन—

मू.—वज्रमाली च परशुर्गोशीर्षमसिधेनुका ।
लवित्रमास्तरः कुन्तस्स्थूणः प्रासः पिनाककः ॥ १९ ॥
गदा मुद्गरः सीरा मुसलः पट्टिशं तथा ।
यौष्टिकं परिघश्चैव मयूखी च शतघ्निका ॥ २० ॥
अमुक्ता विंशतिरिमे द्वितीयः पाद उच्यते ।
मुक्तामुक्तानि शस्त्राणि द्वात्रिंशद्गणितानि ते ॥ २१ ॥

व्या.—अमुक्ताः स्थितिस्वभावाः । द्वात्रिंशत् । शस्त्रप्रतिपादकधनुर्विद्या प्रथमद्वितीयपादाभ्यां प्रतिपादिताः द्वात्रिंशदेवेत्यर्थः । गणितानि गणनपूर्वकं कथितानि ॥ २१ ॥

तृतीयपादप्रतिपादितान्यस्त्राणि नामतो निर्दिशति ॥ दण्डचक्रमित्यादिना ॥

मू.—दण्डचक्रं धर्मचक्रं कालचक्रं तथैव च ।
ऐन्द्रचक्रं शूलवतं ब्रह्मशीर्षं च मोदकी ॥ २२ ॥
शिखरी धर्मपाशश्च तथा वरुणपाशकम् ।
पैनाकास्त्रश्च वायव्यं शुष्कार्द्रं शिखरास्त्रकम् ॥ २३ ॥
क्रौञ्चास्त्रं हयशीर्षश्च विद्याविद्येऽस्त्रसंज्ञिके ।
गान्धर्वास्त्रं नन्दनास्त्रं वर्षणं शोषणं तथा ॥ २४ ॥

प्रस्वापनप्रशमने सन्तापनविलापने ।
मदनं मानवास्त्रञ्च नायनं तामसं तथा ॥ २५ ॥
संवर्तं मौसलं सत्यं सौरं मायास्त्रमेव च ।
त्वाष्ट्रमस्त्रञ्च सोमास्त्रं संहारं मानसं तथा ॥ २६ ॥
नागास्त्रं गारुडास्त्रञ्च शैवेषीके ऽस्त्रसंज्ञिके ।
चतुश्चत्वारि चैतानि सोपसंहारकाणि वै ॥ २७ ॥

व्या.—शूलवतं शूलवतनामकम् । क्वचिच्छूलवरमिति वा पाठः । ब्रह्मशीर्षं ब्रह्मास्त्रादन्यत् । मोदकीत्युपनामकगदासंज्ञास्त्रम् । शिखर्युप नामकगदासज्ञकास्त्रम् । शुष्कार्द्रे अशन्युपनामके ऽस्त्रे । पिनाकिनो ऽग्नेरिदं पैनाकम् ॥ २३ ॥ नन्दनास्त्रं विद्याधरदेवताकम् । तदस्त्रादसीनां प्रादुर्भावः इति भावः । नन्दनस्यैवासिरत्नमिति नामान्तरम् ॥ २४ ॥ प्रशमनं शत्रूणां क्रोधशामकम् । मदनं रिपूणामुन्माद-जनकं मानवास्त्रं शत्रुमपसार्य दूरे प्रक्षेपकम् । तामसं रिपूणामज्ञान-जनकम् । सर्वेष्वस्त्रेषु स्वस्वनामानुरूपकार्यकारित्वं व्युत्पत्तिमहिम्ना सुधीभिर्विभावनीयम् ॥ २५ ॥ मौसलं मुसलव्यूहनिर्माणसामर्थ्यवत् । असुरादन्यविधं मायास्त्रम् । इन्द्रजालादिमायाकारकम् ॥ संहारं प्राणवियोजकम् । मानसं मनस्सङ्कल्पसाधकम् ॥ २६ ॥ नागास्त्रं सर्परूपेण शत्रुबन्धकमस्त्रम् । शैलं वायव्याद्यस्त्रबाधावारणायपर्वतपङ्क्ति-सृष्टिहेतुकम् । उपसंहारकाणि मुक्तामुक्तानीत्यर्थः ॥

उपसंहाराणामपि तृतीयपाठकथनीयत्वादत्रैव तानपि नामतो वक्ति क्रमप्राप्तान् ।

मू.—वक्ष्यामि चोपसंहारान् क्रमप्राप्तान्निबोध मे ।
याञ्ज्ञात्वा वैरिमुक्तानि चास्त्राणि शमयिष्यसि ॥ २८ ॥

व्या.—क्रमप्राप्तानुपसंहारकतयानुपदमेव बुद्ध्यधिरूढान् । मे मम । वदनादिति शेषः । वैरिमुक्तानि चेत्यत्र चकारात् स्वप्रयुक्तस्यास्त्रस्य मन्त्रविशेषेण पुनरात्मनि स्थापनरूपसामर्थ्यमपि द्योत्यते । उपसंहार-परिज्ञाने पुनः प्रयोगानर्हतयास्त्राणां प्राप्तप्रायत्वमापद्यते इत्युपसंहार कथनमिति भावः ॥ २८ ॥

मू·—सत्यवान् सत्यकीर्तिश्च रभसो दृष्ट एव च ।
प्रतिहारतरश्चैवावाङ्मुखपराङ्मुखौ ॥ २९ ॥
दृढनाभोऽलक्ष्यलक्ष्यावाविलश्च सुनाभकः ।
दशाक्षश्शतवक्त्रश्च दशशीर्षशतोदरौ ॥ ३० ॥
धर्मनाभो महानाभस्तुन्दनाभस्तु नाभकः ।
ज्योतिषो विमलश्चैव नैरास्यकृशनावुभौ ॥ ३१ ॥
योगन्धरस्सनिद्रश्च दैत्यः प्रमथजस्तथा ।
सार्चिमाली धृतिर्माली वृत्तिमान् रुचिरस्तथा ॥ ३२ ॥
पित्र्यस्सौमनसश्चैव विधूतमकरौ तथा ।
करवीरो धनरती धान्यं वै कामरूपकः ॥ ३३ ॥
जृम्भकावरणौ चैव मोहः कामरुचिस्तथा ।
वरुणस्सर्वदमनस्सन्धानस्सर्वनाभकः ॥ ३४ ॥

व्या·—अनिलस्तन्नामा । सुनाभ एव सुनाभकः । स्वार्थे कप्रत्ययः ॥ ३० ॥ नैरास्यश्च कृशनश्चेत्युभौ द्वित्वसङ्ख्यावन्तौ । न तूभाविति पृथग्ग्रहणम् ॥ ३१ ॥ दैत्यस्तन्नामकः । न तु दितिगर्भसंभूतः । अत्रावयवार्थेनार्थग्रहणस्यायुक्तत्वात् इत्यादिः ॥ ३२ ॥ धनश्च रतिश्च धनरती । पुलिङ्गद्विवचनम् ॥ ३३ ॥ ननूपसंहारेष्वेकोनपञ्चाशदुद्देशात्पूर्वं चतुश्चत्वारिंशदस्त्रकथनादुपरितनपञ्चोपसहार्याणि कानीत्याशङ्क्य कङ्कालादि पञ्चास्त्राण्युक्त्वा चैतेषु तदुपसंहारांश्च विवेचयन् तां शङ्कां परिहरति । कङ्कालेत्यादिना—

कङ्कालास्त्रं मौसलास्त्रं कापालास्त्रञ्च कङ्कणम् ।
पैशाचास्त्रञ्चेति पञ्चाप्यसुरास्त्राणि भूपते ॥ ३५ ॥

व्या.—असुरास्त्राणि मयशम्बरमारीचविद्युज्जिह्वेन्द्रजित्सृष्टानि । तत्र कानिचित् सृज्यमानान्यपि सर्वज्ञतयासुप्रभया पूर्वमेव तदुपसंहाराः सृष्टा इत्यविरोधः ॥ ३४ ॥

मू·—सत्यवान् सर्वदमनः कामरूपस्तथैव च ।
योगन्धरोऽप्यलक्ष्यश्चाप्यसुरास्त्रविघातकाः ॥ ३६ ॥

चतुश्चत्वारिंशदेते पञ्चान्योन्यविमर्दनाः ।
मेलयित्वा च पञ्चाशदेकोना ह्यस्त्रशामकाः ॥ ३७ ॥
सर्वमोचननामा तु सुप्रभातनयो महान् ।
मुक्तामुक्तारिवलशमो मद्वरात्प्रथितः परः ॥ ३८ ॥
अयं तृतीयपादस्स्याद्धनुर्वेदस्य भूपते ।

व्या.—मन्त्रमुक्तषडस्त्रप्रतिपादनेन जयापुत्रपञ्चाशत्त्वं बोधयति - मन्त्रमुक्ताश्चापीत्यादिना सार्धश्लोकेन ॥

मू.—मन्त्रमुक्ताश्चाऽपि वक्ष्ये सावधानमनाश्शृणु ॥ ३९ ॥
विष्णुचक्रं वज्रमस्त्रं ब्रह्मास्त्रं कालपाशकम् ।
नारायणं पाशुपतं नाशाम्यमितरास्त्रकैः ॥ ४० ॥
स्वान्यसंहारकाभावान्मन्त्रमुक्तान्यमूनि षट् ।
अयश्चतुर्थपादस्स्याद्धनुर्वेदस्य सम्मतः ॥ ४१ ॥

व्या.—विश्वामित्रवसिष्ठयोर्युद्धे ब्रह्मास्त्रेणैव तच्छान्तम् । ब्राह्मं ब्राह्मेण तेजसेत्यादिना ब्रह्मास्त्रादीनामुपसंहारदर्शनात् कथं मन्त्रमुक्तत्वमित्याशङ्कां मन्त्रमुक्तपदस्य विशेषार्थपर्यवसायित्वकथनेन परिहरति—स्वान्यसंहारकाभावादित्यादिना—तथा च स्वव्यतिरिक्तोपसंहारकमन्त्ररहितमेव मन्त्रमुक्तमित्युच्यते । इति सर्वश्चतुरस्रम् । अयं मन्त्रमुक्तविचारः । सम्मतः नीतिज्ञानुमत इत्यर्थः ॥ ४१ ॥

शस्त्राणि द्वात्रिंशदेवेति बोधयितुमितिहासमाह—शृण्वित्यादिना—

मू.—शृणु चाप्यपरं भूयो विशेषं वच्मि तेऽनघ ।
पुरा दैवासुरे युद्धे निर्जिता दानवैस्सुराः ॥ ४२ ॥

व्या.—अपरं विशेषं जयासृष्ट्यनन्तरजातप्रभेदम् ॥ ४२ ॥

मू.—धनुर्वेदाविशेषज्ञाः पलायनपरायणाः ।
दधीचिमृषिमालोक्य तस्मै दत्वायुधानि ते ॥ ४३ ॥

व्या.—धनुर्वेदाविशेषज्ञाः धनुर्वेदविशेषानभिज्ञाः । अत एव पलायनपरायणास्सन्तो दधीचिं तन्नामकं महर्षिमालोक्य पलायनमार्गे इति शेषः । दत्वा दैत्येभ्यो रक्षणार्थं न्यासविधिना तत्सात्कृत्वा ॥ ४३ ।

मन्दरं पर्वतश्रेष्ठं वस्तुकामा द्रुतं ययुः ।
ते तत्रोषुर्बहूनब्दानिन्द्रमुख्या भयात्सुराः ॥ ४४ ॥

व्या.—पर्वतश्रेष्ठमुद्दिश्येति शेषः । ऊषुः स्थिताः ॥ ४४ ॥

दधीचिरपि तानत्वा दैतेयेभ्यो ह्यरक्षत ।
शल्यभूतानि तस्यर्षेरायुधानि तपोबलात् ॥ ४५ ॥

व्या.—अत्त्वा भक्षयित्वा (?) । तपोबलाच्छल्यभूतानि शरीरास्थ्यन्तर्गतानि ॥ ४५ ॥

मू.—अथ मां शरणं प्राप्ता देवास्सेन्द्रपुरोगमाः ।
पराजिता विलीनाश्च मन्दरे भयविह्वलाः ॥ ४६ ॥

व्या.—अथ बहुकालमन्दरप्रवासानन्तरम् । मां ब्रह्माणम् ॥ ४६ ॥

मू.—अथाददां धनुर्वेदं देवेभ्यस्सरहस्यकम् ।
चतुष्पादयुतं साङ्गं तेषामनुजिघृक्षया ॥ ४७ ॥

व्या.—अथ मामुद्दिश्य शरणप्राप्त्यनन्तरं । अददां दत्तवानस्मि ॥ ४७ ॥

मू.—अथ लब्धवरा मत्तो योद्धुं दैतेयसत्तमान् ।
दधीचिं प्रस्थिता दृष्ट्वा तान्ययाचन्त सङ्गताः ॥ ४८ ॥

व्या.—लब्धवराः प्राप्तधनुर्विद्याः । प्रस्थिताः । अभिषेणनकौतुकाः । दधीचिं दृष्ट्वा, तदाश्रम इति शेषः । तानि पूर्वदत्तायुधानि । अयाचन्त । युद्धे जयसाधनार्थं देहीत्यब्रुवन् इत्यर्थः ॥ ४८ ॥

मू.—आयुधापेक्षिणां श्रुत्वा वचनं ऋषिसत्तमः ।
शल्यभूतानि सञ्चिन्त्य कृपार्द्रस्तानथाब्रवीत् ॥ ४९ ॥

व्या.—शल्यभूतानि तदवलेपदर्शनजनितस्वकृतास्येन महिम्ना च शल्यभूतानि ॥ ४९ ॥

साधनान्यस्थिभूतानि मम देहे दिवौकसः ।
गोजिह्वया लेहयित्वा विशासित्वायुधानि वः ॥ ५० ॥

व्या.—साधनानि युद्धोपकरणानि । लेहयित्वा लेहनव्याजेनमद्देहं शकलीकृत्य विशासित्वा । कर्तनपूर्वकं लेहयित्वा ॥ ५० ॥

मू.—मदंशान्त्युपादाय जयध्वं युधि शात्रवान् ।
मम चैवं वधो दृष्टो नात्र कार्या विचारणा ॥ ५१ ॥

व्या.—न चैवं दुर्मरणं तव स्यादित्याशङ्क्याह—ममेति । दृष्टो ब्रह्मणा सङ्कल्पित इत्यर्थः ॥ इदं तपसा दृष्टमिति ॥ ५१ ॥

देवकार्यार्थं देहविनियोगे मम नरकं न घटत इत्याह—देवेति ॥

मू.—देवोपयोगिनं देहमिमं कृत्वा दिवं व्रजे ।
यूयं स्वकार्यं संसाध्य मम लोकान्प्रयच्छत ॥ ५२ ॥

ते तस्य वचनं श्रुत्वा तथा चक्रुर्दिवौकसः ।
आत्मकार्यगरीयस्त्वात्तत्कार्यं प्रतिपेदिरे ॥ ५३ ॥

व्या.—आत्मकार्यगरीयस्त्वादवश्यकरणीयत्वेनात्मकार्यस्य श्रेष्ठत्वात् । प्रतिपेदिरेऽङ्गीकृतवन्तः ॥ ५३ ॥

तर्हि ब्रह्महत्याश्रयीभूतं किमित्याशङ्क्याह गोमुखमिति ।

मू.—गोमुखं ब्रह्महत्यापि विवेश नृपसत्तम ।
देवसन्तोषणाल्लोकान् शाश्वतान् स ऋषिर्ययौ ॥ ५४ ॥

तदाप्रभृति लोका वै न पश्यन्तीह गोमुखम् ।
प्रातः पुरुषशार्दूल तद्दोषगतमानसाः ॥ ५५ ॥

व्या.—प्रातः पुण्यवस्तुदर्शनं । प्रातः । कालविहितम् । मध्याह्नादौ कदाचित्पापिदर्शनेऽपि तावद्दोषो नास्तीति प्रातःपदेन सूचितम् । कुतः, तद्दोषगतमानसाः स्मृतदोषा इत्यर्थः ॥ ५५ ॥

मू.—एकत्रिंशच्च कङ्कालास्ता चैका च कशेरुका ।
द्वात्रिंशन्निर्गता देहात्तस्यर्षेस्सुमहात्मनः ॥ ५६ ॥

व्या.—कङ्कालश्शरीरास्थि । कशेरुका पृष्ठास्थि । "स्याच्छरीरास्थि कङ्कालः पृष्ठास्थि च कशेरुका" इत्युभयत्रामरः ॥ ५६ ॥

मू.—यद्यदङ्गाश्रितश्चास्थि यद्यद्रूपमगान्मुनेः ।
तत्तदस्थ्युद्भूतं शस्त्रं तत्तदाकारकं ह्यभूत ॥ ५७ ॥

व्या.—केषाञ्चिदायुधानां ह्रस्वत्वम् । केषाञ्चिदुच्चत्वं विलक्षण वर्णत्वञ्चैकजातास्थीनां कथमित्याशङ्कयोच्चावचत्वप्राप्तिकं कारणमाह यदिति ॥ ५७ ॥

मू.—तीक्ष्णस्वभावाद्गर्वाच्च दधीचिमुपताप्य तु ।
तद्रक्षितान्यायुधानि तेन शल्यीकृतानि वै ॥ ५८ ॥

व्या.—तीक्ष्णस्वभावात्स्वभावतैक्ष्ण्यात् गर्वात् अस्थिनिगरण-कर्तुरन्तर्धानतीक्ष्णस्वभावादन्तर्दाहः कर्तव्य इत्यहङ्कारात् तेन तपश्शक्ति-मता शल्यीकृतान्यस्त्राकारकाणि कृतानि । वै निश्चये ॥ ५८ ॥

मू.—शस्त्राणि लोके द्वात्रिंशत्प्रचरिष्यन्ति पार्थिव ।
कशेरुकोद्भवं वज्रमिन्द्रहस्तगतं विना ॥ ५९ ॥

व्या.—लोके भूलोके । वज्रायुधधारणे नराणामसामर्थ्याचद्विनेति ॥ ५९ ॥

मू.—धनुर्वेदस्य माहात्म्यान्निर्जिता दानवास्सुरैः ।
भूलोके त्वावधीकृत्य धनुरादि चरिष्यति ॥ ६० ॥

व्या.—धनुर्वेदस्य धनुर्विद्याग्रहणस्य । त्वा त्वाम् । अवधीकृत्य प्रवर्तकगुरुमाश्रित्य धनुरादि चरिष्यतीत्यन्वयः ॥

मू.—धनुर्वेदाविदं त्वां तु समाश्रित्य नृपोत्तमाः ।
नीतिमन्तो भविष्यन्ति मत्प्रसादान्न संशयः ॥ ६१ ॥

व्या.—नीतिमन्तो राजशास्त्राभिज्ञाः । न त्वेदृताशा दृष्टा मया । कुत इत्याशङ्क्याह—मत्प्रसादादिति ॥

मू.—इत्येतत्कथितं वत्स माहात्म्यं वेदसम्मितम् ।
शस्त्रोत्पत्तिश्च कथिता किं भूयश्श्रोतुमिच्छसि ॥ ६२ ॥

व्या.—वेदसम्मितं धनुर्वेदप्रतिपाद्यम् । उत्तरकथाप्रश्नं बोधयति किं भूय इति ॥ ६२ ॥

मू.—धनुर्वेदस्योपदेशमिमं योऽधिगमिष्यति ।
त्वत्कृते मत्कृते सोऽथ सर्वान् कामानवाप्नुयात् ॥ ६३ ॥

व्या.—अधिगमिष्यति ज्ञास्यति । सर्वान् कामानवाप्नुयादिति शास्त्राध्ययनस्य प्रयोजनकथनम् ॥

मू.—पारीक्षित महाबुद्धिः पृथुश्श्रुत्वा विधेर्वचः ।
हृदयस्थं ततो भावं द्रष्टुं समुपचक्रमे ॥ ६४ ॥

॥ इति वैशम्पायननीतिप्रकाशिकायां
धनुर्वेदविवेककथनं नाम
द्वितीयस्सर्गः ॥

व्या.—पारीक्षित जनमेजय । महाबुद्धिरिति पृथुविशेषणम् । भावमभिप्रायम् ॥

॥ इति श्रीसीतारामकृतायां नीतिप्रकाशिकातत्वविवृतौ
द्वितीयस्सर्गः ॥

*

## अथ तृतीयस्सर्गः

(खड्गोत्पत्तिकथनम्)

मू.—लोकनाथ नमस्तेऽस्तु सर्वाश्चर्याश्रय प्रभो ! ।
उत्पादितो मया खड्गः पूर्वमित्युदितं त्वया ॥ १ ॥

व्या.—अथ पृथुः खड्गोत्पत्तिं प्रष्टुं ब्रह्माणं गुरुं नमस्करोति-लोकनाथेति । सर्वेषाञ्चतुर्दशभुवनान्तर्गतानां । आश्चर्याणां बुद्धीन्द्रियविकासकानां । आश्रय आवासभूतः ॥ १ ॥

मू.—खड्गः कदा हि जनितस्त्वया केनेह हेतुना ।
कस्त्वत्सकाशात्प्रथममग्रहीदसिमुत्तमम् ॥ २ ॥

व्या.—प्रश्नप्रकारः । खड्ग इत्यादिना ॥ २ ॥

मू.—परम्परा तु का तस्य भूलोकप्रापणी विभो ।
पूर्वाचार्यश्च खड्गस्य मम ब्रूहि पितामह ॥ ३ ॥

व्या.—परम्परा, शिष्यप्रशिष्यसन्ततिः । तस्य खड्गस्य भूलोकप्रापणी लोके प्रचारयित्री । पूर्वाचार्यं प्रथमप्रतिगृहीतारम् ॥ ३ ॥

मू.—स तद्वचस्समाकर्ण्य प्रोवाचेदं पितामहः ।
यत्र येन निमित्तेन यथासौ जनितः पुरा ॥ ४ ॥

व्या.—पितामाहः ब्रह्मा । येन निमित्तेन येन कारणेन । यथा येन प्रकारणेन । असौ खड्गः ॥ ४ ॥

मू.—वेनपुत्र प्रवक्ष्यामि खड्गसम्भवमुत्तमम् ।
सावधानमनाश्श्रुत्वा सर्वत्र जयमाप्स्यसि ॥ ५ ॥

व्या.—वेनस्य तन्नामकराज्ञः पुत्रः ॥ ५ ॥

मू.—विशीर्णे कार्मुके राजन्प्रक्षीणेषु च वाजिषु ।
खड्गेन शक्यते युद्धे साध्वात्मा परिरक्षितुम् ॥ ६ ॥

व्या.—विशीर्णे खण्डिते । प्रक्षीणे मृतेषु । साधु सम्यक् ॥ ६ ॥

मू.—शरासनधरांश्चैव गदाशक्तिधरांस्तथा ।
एकः खड्गधरो वीरस्समर्थः प्रतिबाधितुम् ॥ ७ ॥

व्या.—शराः बाणाः । आसनं तस्याधारः तान् । एवकारश्चाप्यर्थकः । सर्वायुधधरांश्चापीत्यर्थः । प्रतिबाधितुं वैपरीत्येन हन्तुम् ॥ ७ ॥

मू.—आयुधेभ्यो वरः खड्गः तस्माल्लोकेषु विश्रुतः ।
मया सृष्टः पुरा राजन् कस्मिंश्चित्कारणान्तरे ॥ ८ ॥

व्या.—यस्मात्सर्वेभ्य आयुधेभ्यश्चोत्कृष्टसामर्थ्यवान् । तत्र हेतुर्मया सृष्टत्वम कारणान्तरे निमित्तान्तरे ।

व्या.—तत्कारणमाह—हिरण्यकशिपुरिति

मू.—हिरण्यकशिपुश्चैव हिरण्याक्षो विरोचनः ।
शम्बरो विप्रचित्तिश्च प्रह्लादो नमुचिर्बलिः ॥ ९ ॥

एते चान्ये च बहवस्सगणा दैत्यदानवाः ।
धर्मसेतुमतिक्रम्य देवैर्योद्धुमुपाक्रमन् ॥ १० ॥

व्या.—दैत्या दितिकुमाराः । दानवा दनुनाम्न्यास्सुताः । धर्मसेतुं धर्मसीमानम् । अतिक्रम्योल्लङ्घ्य । उपाक्रमन्नारभन् ॥ १० ॥

व्या.—खड्गसृष्टिप्रदेशमाह तदेत्यादिना ।

मू.—तदा हिमवतश्शृङ्गे नानाधातुविराजिते ।
शतयोजनविस्तारे पुष्पितद्रुमकानने ॥ ११ ॥

व्या.—तदा धर्मह्राससमये नानाधातुभिस्स्वर्णरूप्यादिभिः विराजिते । शतयोजनविस्तारे शतयोजनसङ्ख्याकपरिमण्डलवति । हिमवतश्शृङ्गे प्रधानशिखरे ॥ ११ ॥

मू.—यज्ञं ह्यकरवंतत्र सर्वलोकार्थसिद्धये ।
ततो वर्षसहस्रान्ते त्वद्भुतं समजायत ॥ १२ ॥

व्या.—अकरवं कृतवानस्मि । स्वस्य यज्ञकरणे प्रयोजनमाह—सर्वेति सर्वलोकानां । समस्तजनानां । अर्थः परलोकसाधनरूपः तस्य सिद्धिशिक्षा । तस्यैतत् । यज्ञोपक्रमणानन्तरं वर्षसहस्रान्ते यज्ञावसाने । अद्भुतमाश्चर्यम् ॥ १२ ॥

मू.—नभोऽग्निज्वालयोद्भास्यं द्योतयञ्जगतीतलम् ।
विकीर्याग्निं तथा भूतमुत्थितश्चाग्निकुण्डतः ॥ १३ ॥

व्या.—नभोऽन्तरिक्षम् । अग्नेराहवनीयाग्नेः । ज्वालयोद्भास्य उत्थानसमये वेगादग्निज्वालायां चिरं प्रकाश्येत्यर्थः । जगतीतलं भूप्रदेशं । द्योतयत्स्वदेहकान्त्या प्रकाशयत् । अग्निं स्वोत्पत्तियोग्यम् । विकीर्य प्रसार्य । अग्निकुण्डतो भूतमुत्थितमिति योजना ॥ १३ ॥

मू.—नीलोत्पलसवर्णन्तत्तीक्ष्णदंष्ट्रं कृशोदरम् ।
सुप्रांशु दुर्धर्षतरं ज्वालमालासमाकुलम् ॥ १४ ॥

व्या.—भूतमेव वर्णयति नीलोत्पलेत्यादिना । सुप्रांश्वत्युन्नतम् । दुर्धर्षतरमितरैरत्यन्तमधर्षणीयम् । ज्वालानाम् देहभासां मालासमाकुलं व्याप्तम् ॥ १४ ॥

मू.—रक्ताक्षं क्रूरनिर्ह्रादं सर्वप्राणिभयङ्करम् ।
स्वतेजसातिरौद्रेण द्रष्टुर्दृष्टिविलोपकम् ॥ १५ ॥

व्या.—क्रूरनिर्ह्रादं भयङ्करक्रेङ्कारयुक्तं । द्रष्टृणा दृष्टेर्विलोपकं । अतिक्रूराकारत्वाद्द्रष्टुमशक्यमित्यर्थः ॥ १५ ॥

व्या.—तादृशभूतसमुत्पत्तिकाल उत्पातानाहः—तस्मिन्नित्यादिना ।

मू.—तस्मिन्नुत्पतमाने च प्रचचाल वसुन्धरा ।
महोर्मिकलिलावर्तश्चुक्षुभे स महोदधिः ॥ १६ ॥

व्या.—उत्पतमाने प्रोद्यमाने । महोर्मिभिः कलिला व्याकुलाः आवर्ता अम्भसां भ्रमयः यस्य सः । तादृशस्सन् चुक्षुभे क्षुब्धोऽभूत् । १६ ॥

मू.—पेतुरुल्का दिवो घोराश्शाखाश्च मुमुचुर्द्रुमाः ।
तद्दृष्ट्वा सर्वभूतानि प्राव्यथन्त मुहुर्मुहुः ॥ १७ ॥

व्या.—दिव अन्तरिक्षात् । उल्का अङ्गारमात्रशेषकाष्ठाः । "उल्का स्यान्निर्गतज्वाले"त्यमरः । शाखा द्रुमशाखाः ॥

मू.—महर्षिसुरगन्धर्वानब्रवं भयविह्वलान् ।
मयैवं चिन्तितं भूतमासिन्नमेष वीर्यवान् ॥ १८ ॥

व्या.—अब्रुवं । तमिति । शेषः ।

मू.—रक्षणार्थाय लोकस्य वधाय च सुरद्विषाम् ।
ततस्तद्रूपमुत्सृज्य बभौ निस्त्रिंश एव सन् ॥ १९ ॥

व्या.—निस्त्रिंश एव सन् खड्गाकार एव सन् । बभौ स पुरुषः । विधेयप्राधान्यात्पुल्लिङ्गता ॥ १९ ॥

मू.—विमलस्तीक्ष्णधारश्च कालान्तक इवोद्यतः ।
पञ्चाशदङ्गुल्युत्सेधश्चतुरङ्गुलिविस्तृतः ॥ २० ॥

व्या.—तीक्ष्णा धारा यस्य सः । काले प्रलयकाले अन्तक उद्यतः संहारोद्युक्तः । पञ्चाशदङ्गुलीनामुत्सेध औन्नत्यं यस्य सः ॥ २० ॥

व्या.—तस्य प्रथमप्रगृहीतारमाह—तत इत्यादिना ।

मू.—ततस्त्वृषभकेतोस्स हस्ते दत्तो मया ह्यसिः ।
राक्षसान्तकरस्तीक्ष्णस्तदाधर्मनिवारकः ॥ २१ ॥

व्या.—तीक्ष्णो निशितः । अस्यते क्षिप्यते शत्रूपरीत्यसिः । असु क्षेपणे । अधर्मनिवारक इति छेदः ॥ २१ ॥

मू.—तमुद्धृत्य महादेवस्सर्वशत्रुभयङ्करम् ।
त्रिकूटचर्मचोद्यम्य सविद्युतमिवाम्बुदम् ॥ २२ ॥

व्या.—त्रिकूटन्त्रिशिखरम् । त्रिकोणं वा । चर्मखेटकं नैल्यान्मेघस्थानीयम् । विद्युत्स्थानीयः खड्गः ॥ २२ ॥

मू.—चचार विविधान्मार्गान्महाबलपराक्रमः ।
छिन्दन्भिन्दन्रुजन्कृन्तन्दारयन्पोथयन्नरीन् ॥ २३ ॥

व्या.—भिन्दन्द्वैधीभावं प्रापयन् । छिन्दन् छेदनं कुर्वन् । रुजन् व्यथयन् । कृन्तन्सावशेषं कर्तयन् । दारयन् पाटयन् । पोथयन् झर्झरयन् ॥ २३ ॥

मू.—द्वात्रिंशत्करणानि स्युर्यानि खड्गप्रयोधने ।
चित्रशीघ्रपदं तानि दैत्यसङ्घे व्यदर्शयत् ॥ २४ ॥

व्या.—खड्गप्रयोधने खड्गयुद्धे । चित्राणि विन्यासचतुराणि, शीघ्राणि त्वरितानि, पदानि पादविन्यासा यस्मिन् कर्मणि तत् तथा तानि । वक्ष्यमाणत्वेन प्रसिद्धानि द्वात्रिंशत्करणानि वल्गितानि दैत्यसङ्घेऽदर्शयदिति योजना ॥ २४ ॥

व्या.—द्वात्रिंशत्करणानि विशदयति । भ्रान्तमित्यादिना—

मू.—भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं सृतम् ।
संयान्तं समुदीर्णश्च निग्रहप्रग्रहौ तथा ॥ २५ ॥

व्या.—भ्रान्तं भ्रमणम् । उद्भ्रान्तमूर्ध्वभ्रमणम् । आविद्धं भुग्नम् । "आविद्धकुटिलम्भुग्न"मित्यमरः । आप्लुतं हरिणवत्प्लुतम् । विप्लुतं विशेषप्लवनम् । सृतमनुसरणम् । संयातं सम्यग्यानम् । समुदीर्णं सम्यक्करणम् । निग्रहोऽधिक्षेपः । प्रग्रहो दृढग्रहणम् ॥ २५ ॥

मू.—पादावकर्षसन्धाने शिरोभुजपरिभ्रमौ ।
पाशपादविबन्धाश्च भूम्युद्भ्रमणके तथा ॥ २६ ॥

व्या.—पादावकर्षः पादप्रान्तेन खड्गनमनम् । सन्धानं शत्रूपरि विन्यासः । शिरोभ्रमणं भुजपरिभ्रमणम् । पाशः खड्गयोर्ग्रथनं प्रसिद्धम् । पादः त्सरुमिश्रणं । खड्गयोर्मिश्रणम् । 'पाशः पादो मुष्टिविमिश्रणम्' इति मेदिनी । विबन्धः खड्गनिरोधनम् । भूमिरधोविन्यासः । उद्भ्रमणकमुच्चैरुद्धूतिः ॥ २६ ॥

मू—गतप्रत्यागताक्षेपाः पातनोत्थानके प्लुतम् ।
लाघवं सौष्टवं शोभा स्थिरत्वं दृढमुष्टिता ॥ २७ ॥

व्या.—गतं पश्चाद्गमनम् । प्रत्यागतं शत्रूद्देशेनाभिमुखगमनम् । आक्षेपो रिपुमुष्टिस्खालनम् । पातनं रिपुकराद्भूमौ खड्गन्यासनम् । उत्थानकं स्वखड्गोद्धूतिः । प्लुतं स्वस्थानप्राप्तिः । लाघवं शीघ्रप्रयोगः । सौष्ठवं खड्गधारणनैपुण्यम् । शोभा एकेनैव खड्गेन समन्ताच्चालितेन सर्वदिगवच्छेदेन झळझळायमानता । स्थिरत्वं दृढावस्थितिः । दृढमुष्टिता त्सरोर्दृढग्रहणम् ॥ २७ ॥

मू.—तिर्यगूर्ध्वप्रचरणे द्वात्रिंशत्करणान्यहो ।
विजित्य दानवान् संख्ये हृष्टो रुद्रो बभूव ह ॥ २८ ॥

व्या.—तिर्यक्प्रचरणं तिर्यग्गतिः । ऊर्ध्वप्रचरणमुन्नतदेशावस्थितिः । इति द्वात्रिंशत्खड्गवल्गितानीत्यर्थः । सङ्ख्ये युद्धे । हृष्टरूपस्सन्तुष्टाकारः ॥ २८ ॥

व्या.—अथ खड्गविद्यायाश्शिष्यप्रशिष्यान्कथयितुं तदादौ विष्णोः खड्गप्राप्तिं कथयति—तत इति

मू.—ततस्तु भगवान् रुद्रो विष्णुं दृष्ट्वा समीपगं ।
सत्कृत्य धर्मगोप्तारमसिं तस्मै ददौ मुदा ॥ २९ ॥

व्या.—समीपगं खड्गग्रहणार्थमन्तेवासिनम् सत्कृत्य महागुणवत्त्वादि कथनेन संपूज्य। धर्मगोप्तारमित्यपि विशेषविशेषणम् । तस्मै विष्णवे। मुदा प्रापणजन्यसन्तोषेण ॥ २९ ॥

मू.—विष्णुर्मरीचये प्रादान्मरीचिर्भगवानपि ।
महर्षिभ्यो ददौ खड्गमृषयो वासवाय च ॥ ३० ॥

व्या.—भगोऽस्यास्तीति भगवान् । तथा 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इत्युक्तेः ॥ ३० ॥

मू.—महेन्द्रो लोकपालेभ्यो लोकपाला ददुश्च तं ।
मनवे सूर्यपुत्राय ततस्ते तमथाब्रुवन् ॥ ३१ ॥

व्या.—महेन्द्रो वृत्रहन्ता । 'इन्द्रो वृत्रमवधीत् तन्महेन्द्रस्य महेन्द्रत्वम्' इति श्रुतेः । ते लोकपालाः तं मनुम् ॥ ३१ ॥

मू.—धर्मसेतुमतिक्रान्ताल्लोकधर्मार्थकारणात् ।
असिना धर्मगर्भेण शिक्षयस्व प्रजापते ॥ ३२ ॥

व्या.—लोके जगति । धर्मार्थकारणाद्धर्मार्थादीनां संरक्षणनिमित्तं । धर्मगर्भेण धर्मसंरक्षणार्थमुत्पन्नत्वात् धर्मगर्भत्वव्यपदेशः । शिक्षयस्वाकार्याग्निवर्तय । हे प्रजापते मनो ॥ ३२ ॥

मू.—स तथेति प्रतिश्रुत्य गृहीत्वा खड्गमुत्तमम् ।
लोके प्रवर्तयामास राजधारामुखेन वै ॥ ३३ ॥

व्या.—प्रतिश्रुत्य प्रतिज्ञाय । राजधारामुखेन राजपरम्परद्वारा ॥ ३३ ॥

मू·—त्वमप्येतमसिं मत्तो गृहाण नृपसत्तम ।
पालयस्व च धर्मेण प्रजाः पुत्रानिवौरसान् ॥ ३४ ॥

व्या·—हे नृपसत्तम । पुरोग्रहणमन्त्रोपदेशपूर्वकं प्रयच्छ ॥ ३४ ॥

मू·—कृतिकास्तस्य नक्षत्रमसेरामिश्च देवता ।
रोहिणी गोत्रमप्यस्य रुद्रस्तस्याधिदैवतम् ॥ ३५ ॥

व्या·—नामाष्टकरूपमन्त्रमुपदेष्टुं नक्षत्रगोत्रदेवताधिदैवतानि कथयति तथा चोक्तं मन्त्रसारे 'नाममन्त्रेषु नक्षत्रं देवतां . . . . . . . पुरः । गोत्राधिदैवते चैव कथयन्मन्त्रमुच्चरेत्' इति ॥

व्या·—मनुमाह—असेरित्यादिना

मू.—असेरष्टौ हि नामानि रहस्यानि निबोध मे ।
असिर्विशसनः खड्गस्तीक्ष्णधर्मा दुरासदः ॥ ३६ ॥

श्रीगर्भो विजयश्चैव धर्ममालस्तथैव च ।
अग्र्यः प्रहरणानाञ्च रुद्रेणैवं समीरितः ॥ ३७ ॥ ।

व्या·—प्रहरणानामायुधानां मध्ये । अग्र्यः प्रथमं ब्रह्मणा सृष्टः । एतेन द्वात्रिंशदायुधेष्वगणनाप्रयुक्ता न्यूनता परास्ता। रुद्रेण नीलकण्ठेनाप्येवं श्रेष्ठ इति समीरितः ॥ अथवा रोदयति प्रजा अन्तकाले दाहेनेति व्युत्पत्त्या रुद्रोऽग्निः । तेनायुधसृष्टेः प्रागेव मयि जात इति । अग्र्यश्श्रेष्ठस्समीरितः ॥ ३७ ॥

मू.—असेश्च पूजा कर्तव्या सदा युद्धविशारदैः ।
जयं कीर्तिं लभन्ते ते येऽसिं सम्पूजयन्ति वै ॥ ३८ ॥

व्या.—एते पूजकाः ॥ ३८ ॥

मू.—कथेयं कथिता तुभ्यं खड्गमाहात्म्यसंयुता ।
न कस्यचिन्मया प्रोक्ता किं भूयश्श्रोतुमिच्छसि ॥ ३९ ॥

व्या· —कस्यचित त्वदतिरिक्तस्य ॥ ३९ ॥

मू.—जिगीषवोऽरीन् राजानस्त्वभिषेणनकौतुकाः ।
ये पठेयुरिमञ्जय्यं जयं युद्धे लभन्ति ते ॥ ४० ॥

। इति वैशम्पायननीतिप्रकाशिकायां खड्गोत्पत्तिकथनं नाम
तृतीयस्सर्गः ।

व्या.—अरीनुद्दिश्याभिषेणने सेनया सह गमने । कौतुका उत्सुकाः । "यत्सेनयाऽभिगमनमरौ तदभिषेणन" मित्यमरः । जय्यं जयसाधनम् । इमं सर्गम् । ते राजनः । पठेयुर्यदीति शेषः । तदा जयं युद्धे लभन्त इत्यर्थः । ४० ॥

॥ इति श्रीसीतारामकृतायां
नीतिप्रकाशिकातत्वविवृतौ
तृतीयस्सर्गः ॥

## ॥ अथ चतुर्थस्सर्गः ॥

### (मुक्तायुधनिरूपणम्)

मू.—स्वयम्भूवचनं श्रुत्वा पृथुः परमहर्षितः ।
प्रश्रयावनतो भूत्वा भूयः पप्रच्छ चाब्जजम् ॥ १ ॥

व्या.—स्वयम्भवतीति स्वयम्भूः । तस्य प्रश्रयो विनयः । अवनतो नम्रः । अब्जजं कमलजातम् ॥ १ ॥

मू.—द्वात्रिंशदायुधानीति मुक्तामुक्तोदितानि मे ।
तेषां स्वरूपं वर्णञ्च प्रयोगान्वक्तुमर्हसि ॥ २ ॥

व्या.—मुक्तश्चामुक्तश्च मुक्तामुक्ते । द्वे धनुर्वेदपरे । ताभ्यां प्रतिपादितानि द्वात्रिंशदायुधानीति । मे मह्यम् । स्वरूपमेव संस्थानम् । वर्णं नीलपीतादि प्रयोगान् लक्ष्योपरि प्रयोजनानि । तेषामायुधानां । चात् तद्देवतानामपीति द्योत्यते । वक्तुमर्हसीति प्रश्नः ॥ २ ॥

मू.—इति पृष्टस्तु पृथुना भगवान् भक्तवत्सलः ।
तत्सर्वं कथयामास तस्य विस्तारयन् यशः ॥ ३ ॥

व्या.—तत्सर्वं प्रश्नगतप्रमेयजातम् । यशः यतस्सम्यग्धनुर्वेदप्रचारं कृतवानिति यशः । विस्तारयन् प्रसारयन् । कथयामासेत्यन्वयः ॥ ३ ॥

व्या.—आयुधानाञ्चैकसंस्थानरूपतया न पृथक्त्वेनोच्यत इत्याह—यस्येति

मू.—यस्य देवस्य यद्रूपं यो वर्णो यश्च यादृशः ।
आयुधस्याथ तन्नाम्नस्तानवेहि महामते ॥ ४ ॥

व्या.—तान् देहौन्नत्यस्थौल्यवर्णप्रयोगान् ॥ ४ ॥

मू.—पूर्वं वक्ष्यामि मुक्तानां संस्थानानि निबोध मे ।
विदित्वा कारयन्नेवमायुधानां प्रकल्पनम् ॥ ५

व्या.—प्रकल्पनं निर्माणम् ॥

मू.—धनुस्स्वरूपमाख्यास्ये प्रथमं नृपसत्तम ।
तत्प्रमाणञ्च संस्थानं तस्याभ्यासक्रमं तथा ॥ ६ ॥

व्या.—धनुषस्तदाख्यदेवस्य स्वरूपं देहः । तत्प्रमाणं तदौन्नत्यपरिध्यादि । संस्थानमङ्गसम्बन्धादि । ध्यानत्रयमनुसन्धानप्रकारः । तं चाख्यास्ये वक्ष्यामीत्यर्थः ॥

मू.—तत्रावान्तरभेदांश्च शराभ्यासक्रमं तथा ।
लस्तकग्रहणञ्चापि लक्ष्यभेदं चतुर्विधम ॥ ७ ॥

व्या.—तत्र धनुषोऽवान्तरभेदान् वैतस्तिकादिबाणक्षेपकचापादिरूपान् शराभ्यासक्रमं बाणप्रयोगविधिम् । लस्तकस्य धनुर्मध्यस्य ग्रहणं परिग्रहः तं । लस्तकस्तु धनुर्मध्यमित्यमरः । चतुर्विधलक्ष्यभेदो व्याख्यातः ॥ ७ ॥

व्या.—तदाकारमाह—पृथुग्रीवमिति ।

मू.—पृथुग्रीवं सूक्ष्मशिरस्तनुमध्यं सुपृष्ठवत् ।
चतुष्किष्कुप्रांशुदेहं त्रिणतं दीर्घजिह्वकम् ॥ ८ ॥

व्या.—पृथुः ग्रीवा कन्धरम् यस्य तत् । सूक्ष्मं शिरोऽग्रभागो यस्य तत् । तनु कृशं मुष्टिसम्मितमिति यावत् । मध्यः यस्य तत् । सुपृष्ठवत् त्र्यङ्गुलिविस्तृतपश्चाद्भागवत् । चतुष्किष्कुप्रांशुदेहं । हस्तचतुष्टयोत्सेधदेहवत् । त्रिणतं मध्ये ग्रीवाभागयोश्च नम्रम् । दीर्घा जिह्वा यस्य तत् ॥ ८ ॥

मू.—दंष्ट्राकरालवदनं रक्ताभं घर्घरस्वनम् ।
आन्त्रमालापरिक्षिप्तं लेलिहानं च सृक्कणी ॥ ९ ॥

व्या.—दंष्ट्राभिः करालं भयङ्करं वदनं यस्य । आन्त्रमालाभिः परिवृतः । क्षिप्तं बद्धम् । सृक्वणी ओष्ठप्रान्तभागौ ॥ ९ ॥

मू.—जयायाश्च कृशाश्वाद्यज्जातं वै लोकरक्षणे ।
तद्ध्यात्वा मनसा सम्यग्गुरुं नत्वा विधानतः ॥ १० ॥

व्या.—लोकरक्षणे प्रजापरिपालनविषये । तत् धनुषः आदिदेव । गुरुं धनुर्वेदाचार्यम् । विधानतः स्मृत्युक्तप्रकारेण ॥ १० ॥

मू.—धनुर्वेदविधानेन नाम्य वामकरेण तत् ।
दक्षिणेन ज्यया योज्य पृष्ठे मध्ये प्रगृह्य तत् ॥ ११ ॥

व्या.—धनुर्वेदविधानेन धनुर्विद्योक्तविधिना ॥

तद्विधिस्तु—

"नामनं वामकरतो ज्यायोगो दक्षिणेन तु ।
कर्षणं कर्णपर्यन्तं मोचनश्चेति तद्विधिः" इति ॥

दक्षिणेन करेणेत्यनुकर्षः । ज्यया शिञ्जिन्या । मध्ये पृष्ठभागे । तत् धनुः ॥ ११ ॥

मू.—वामाङ्गुष्ठं तदुदरे पृष्ठे तु चतुरङ्गुलीः ।
पुङ्खमध्ये ज्यया योज्य स्वाङ्गुलीविवरेण तु ॥ १२ ॥

व्या.—तदुदरे लस्तकाधोभागे । पृष्ठे ऊर्ध्वभागे । चतुरङ्गुलीः वामकराङ्गुलिचतुष्टयं योजयेदिति शेषः । पुङ्खं द्विदलीकृतं बाणमूलम् । मध्ये मध्यदेशावच्छेदेन । ज्यया गुणेन । स्वाङ्गुलिविवरेणाङ्गुष्ठसहकृतस्वदक्षिणहस्तशाखारन्ध्रेण । योज्येत्यन्वयः ॥ १२ ॥

मू.—आकर्णं तु समाकृष्य दृष्टिं लक्ष्ये निवेश्य च ।
लक्ष्यादन्यमपश्यंस्तु कृतपुङ्खः प्रयोगवित् ॥ १३ ॥

व्या.—लक्ष्ये शरव्ये । निवेश्य स्थापयित्वा । अन्यल्लक्ष्यप्रान्तविद्यमानवस्त्वपि । अपश्यन् । कृतपुङ्खः सम्यक्कृतबाणमूलः । सुप्रयोगं सम्यग्बाणमोक्षं वेत्तीति तादृशो भूत्वेत्यर्थः ॥ १३ ॥

मू.—यदा मुञ्चेच्छरं विध्ये कृतहस्तस्तदोच्यते ।
एवं बाणाः प्रयोक्तव्या ह्यात्मा रक्ष्यः प्रयत्नतः ॥ १४ ॥

व्या.—विध्ये लक्ष्ये । "विध्यं शरव्यं लक्ष्यश्च" इत्यमरः । कृतहस्तः कृतः शिक्षितो हस्तो यस्य सः । न केवलं लक्ष्यपातनं युद्धादौ । किन्त्वात्मसंरक्षणमप्यावश्यकमित्याह आत्मेति । हिरप्यर्थकः अव्ययानामनेकार्थत्वात् ॥ १४ ॥

व्या.—प्रसङ्गाल्लक्ष्यविभागं तदुदाहरणान्यप्याह— अविचाल्येत्यादिभिस्त्रिभिः

मू.—अविचार्यं च सूक्ष्मं च सुकुमारमथो गुरु ।
चातुर्विध्यञ्च लक्ष्यस्य धनुर्वेदविदो विदुः ॥ १५ ॥
भूभृद्भेदश्चाविचार्यं सूक्ष्मं गुञ्जादिभेदनम् ।
कुक्कुटाण्डोदकुम्भानां भेदनं सुकुमारकम् ॥ १६ ॥

व्या.—भूभृद्भेदः पर्वतभेदनम् । गुञ्जादीत्यादिपदात् तद्वन्धककेशादि-खण्डनमपि द्योत्यते ॥ १६ ॥

मू.—रक्षोगजादिदेहानां पातनं गुरु चोच्यते ।
एवञ्च लक्ष्यविवृतिर्विज्ञेया नीतिमत्तरैः ॥ १७ ॥

व्या.—रक्षांसि कुम्भकर्णादीनि । निपातनं कर्तनम् ॥ १७ ॥

व्या.—बाणमोक्षे चतुर्दशवल्गितान्याह—लक्ष्यस्येत्यादिना

मू.—लक्ष्यस्य प्रतिसन्धानमाकर्षणविकर्षणे ।
पर्याकर्षानुकर्षौ च मण्डलीकरणं तथा ॥ १८ ॥

व्या.—प्रतिसन्धानमनुसन्धानम् । आकर्षणं सिञ्जिनीमात्रस्य । विकर्षणम् धनुषोऽपि विनामकम् । पर्याकर्षस्समन्ताद्धूननम् । अनुकर्षश्शत्रुमनुसृत्य कर्षणम् । मण्डलीकरणं कुण्डलाकारेण कर्षणम् ॥ १८ ॥

मू.—पूरणं स्फारणञ्चैव धूननं भ्रामणं तथा ।
आसन्नदूरपातौ च पृष्ठमध्यमपातने ॥ १९ ॥
एतानि वल्गितान्याहुश्चतुर्दश धनुर्विदः ।

व्या.—पूरणं शब्देन सर्वासां दिशां प्रतिध्वनिमत्करणम् । स्फारणं धनुर्विष्फारः । धूननं हस्तप्रसारणभेदः । भ्रामणं शत्रुमोहनार्थं स्वहस्त एव धनुषो विलक्षणसञ्चरणम् । आसन्नपातः समीपशत्रुपातनादिकं । प्रसिद्धम् ॥ १९ ॥

मू.—धनुर्भेदान्प्रवक्ष्यामि तत्तत्कार्यानुसारतः ॥ २० ॥
शार्ङ्गकं त्रिणतं प्रोक्तं वैणवं सर्वनामितम् ।
वैतस्तिकधनुश्शस्त्रं वैणवं तद्धि हस्तकम् ॥ २१ ॥

उपलोत्क्षेपकं चापं वैणवं तद्विरज्जुकम् ।
त्रिहस्तोत्सेधसहितं द्व्यङ्गुलीविस्तृतं तु तत् ॥ २२ ॥

बद्धगोधाङ्गुलित्राणः पृष्ठबद्धेषुधिस्सदा ।
योग्यं कुर्यादन्यथा स्यादपराद्धपृषत्ककः ॥ २३ ॥

व्या.—धनुर्भेदान् धनुष्षु भेदान् भिन्नाभिन्नधनूंषीत्यर्थः। शृङ्गैर्निर्मितं शार्ङ्गिकम् ! तत् त्रिणतम वैणवं वेणुरचितम् । तच्च सर्वमिन्द्र धनुराकारेण नामितं कर्तव्यम चतुर्हस्तप्रमाणकमेतदपि । "चतुर्हस्तप्रमाणं यत्तालमात्रं धनुर्हि त"दिति मेदिनीनिघण्टुपर्यालोचनया धनुर्विशेषणस्थले तालमात्रपदार्थो ज्ञेयः । दैवासुरादिभावेषु यथायोग्यमूह्यम् । वैतस्तिकानां द्वादशाङ्गुलप्रमाणबाणानां क्षेपकं यद्धनुः तच्छस्त्रमित्युच्यते । तच्च वैणवम् हस्तकं हस्तप्रमाणोन्नतियुक्तम् ॥

ते च वैतस्तिका बाणा ये वै चासन्नयोधिनः ।
तद्धनुश्शास्त्रमित्यहुर्धार्यं तद्बुद्धिमत्तरैः ॥ इति नीतिसारे ॥ २०-२१ ॥

व्या.—उपलोत्क्षेपकं पाषाणगुळिकाप्रेरकं द्विरज्जुकम् मध्यसम्बद्धगुणद्वयवत् । द्व्यङ्गुळीविस्तृतमङ्गुलिद्वयविस्तृतिकाण्डफलकवत् ॥ २२ ॥

व्या.—गुध्यति परिवेष्टयति प्रकोष्ठमिति गोधा । अङ्गुलीनां त्राणं रक्षणं यस्मादङ्गुलित्राणम । गोधापरनामकं यदङ्गुलित्राणमङ्गुल्याधारभूतहस्तकवचं तत् बद्धं येन सः । योग्यं शस्त्राभ्यासं । 'शस्त्राभ्यासस्तु योग्यस्स्यात्' इति मेदिनी । अपराद्धपृषत्ककः लक्ष्यात्स्खलितसायकः । "अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः" इत्यमरः ॥ २३ ॥

व्या.—पञ्च धनुर्धारिपादातिस्थितीर्विशदयति—प्रत्यालीढमित्यादिना

मू.—प्रत्यालीढकमालीढं तथा समपदं स्मृतम् ।
विशालं मण्डलञ्चेति पञ्च धानुष्कवृत्तयः ॥ २४ ॥

व्या.—प्रत्यालीढं भूपर्यन्तनमनम् । आलीढं वामपादप्रसारणपूर्वकार्धनमनम् । समपदं पादाभ्यां सम्यगवस्थितिः विशालं पादद्वयान्तः प्रादेशमात्रावकाशतयावस्थितिः । पादौ संवेष्ट्यावस्थितिर्मण्डलमिति । पञ्च धानुष्कवृत्तयः । धनुर्धारिस्थितयः ॥ २४ ॥

मू.—गोधोपासङ्गकवचशिरस्त्राणपरीकराः ।
गलपट्टीसंग्रहश्च रथिनस्साधनानि वै ॥ २५ ॥

व्या.—शिरस्त्राणं शिरःकवचम् । परिकरः कटिवेष्टनम् । गळपट्टीसङ्ग्रहः कन्धररक्षापट्टिसङ्ग्रहः । आयुधपतनप्रतिबन्धकमणिबन्धबद्धचर्मा । साधनान्युपकरणानि ॥ २५ ॥

मू.—प्रदक्षिणश्च शैघ्र्यञ्चाप्यप्रदक्षिणमेव च ।
गतं प्रत्यागतश्चैव मण्डलश्चाप्यवस्थितिः ॥ २६ ॥
मिश्रणं स्फोटनं वीथी रथमार्गास्स्मृता दश ।
धनुर्विद्यां विदित्वैवं निर्दयस्तरणो भवत् ॥ २७ ॥

व्या.—प्रत्यागतं शत्रुसम्मुखगमनम् । मण्डलं भ्रमणम् ॥ २६ ॥ मिश्रणं शत्रुरथेन । स्फोटनम् शत्रुव्यूहानिर्भेदः । वीथी अवक्रगतिः । एते इति शेषः ॥ २७ ॥

मू.—इषुर्नीलवृहद्देहो द्विहस्तोत्सेधसंयुतः ।
परिध्या चाञ्जलिमितो नखमात्रगतिस्तु सः ॥ २८ ॥

व्या.—इषुर्नाम हस्तद्वयोन्नतहस्तपरिमितस्थौल्ययुक्तदारुलगुडः । नीलस्तैलधौतत्वान्नीलवर्णः । बृहत् गुरुर्देहो यस्य सः । हस्तद्वयोत्सेधेन हस्तद्वयोन्नत्येन संयुतो युक्तः । परिध्या परिमण्डलेन अञ्जलिमितः संयुतकरद्वयमध्यमेयपरिधिः । नखमात्रगतिः चतुश्शतकिष्कुप्रमाणदूरवर्तिशत्रुपातनयोग्यगतिमान् ॥ २८ ॥

मू.—भ्रामणं क्षेपणश्चेति द्वे गती स्थूलसञ्ज्ञते ।
इमे गती भगो ज्ञात्वा युद्धारीन्विजयेद्युधि ॥ २९ ॥

व्या.—स्थूलसञ्ज्ञते इषुगते । इषुस्थूलसमाविति मेदिनी ॥ २९ ॥

मू.—भिण्डिवालस्तु वक्राङ्गो नम्रशीर्षो बृहच्छिराः ।
हस्तमात्रोत्सेधयुक्तः करसम्मितमण्डलः ॥ ३० ॥

व्या.—भिण्डिमस्त्रधारणं वलयति श्लथयतीति व्युत्पत्त्या भिण्डिवालो नाम हस्तमात्रोन्नतनताग्रभागबृहद्ग्रन्थियुक्तवक्रकाष्ठम् । एकहस्तधारणयोग्यमण्डलः ॥ ३० ॥

मू.—त्रिभ्रामणं विसर्गश्च वामपादपुरस्सरम् ।
पादघाताद्रिपुहणो धार्यः पादातमण्डलैः ॥ ३१ ॥

व्या.—वामपादपुरस्सरं यथा तथा विसर्गाख्यवल्गितवान् । तत्कर्म पादघातनम् । पादातमण्डलैः पत्तिसमूहैः ॥ ३१ ॥

मू.—शक्तिर्हस्तद्वयोत्सेधो तिर्यग्गतिरनाकुला ।
तीक्ष्णजिह्वोग्रनखरा घण्टानादभयङ्करी ॥ ३२ ॥

व्या.—शक्तिर्नाम हस्तद्वयप्रमाणदृढकाष्ठप्रत्युप्ताश्मसारफलिकाग्रेवर्ति सिंहमुखयुक्ता घण्टमालावृततत्सरुमुक्तायुधविशेषः । तिर्यग्गतिरसंहार्यवस्तुकर्तनार्थं परिवृत्तगमना । अनाकुलेतरायुधभयरहिता । उग्रनखरा । नखस्थानीयमायुधे लोहकण्टकजालम् ॥ ३२ ।

मू.—व्यादितास्यातिनीला च शत्रुशोणितरञ्जिता ।
आन्त्रमालापरिक्षिप्ता सिंहास्या घोरदर्शना ॥ ३३ ॥

व्या.—व्यादितास्या सिंहमुखित्वात् । आन्त्रमालापरिक्षिप्तत्वमायुधे मध्ये मध्ये निबन्धनार्थम् । घोरदर्शना भयङ्करदृष्टिः । शत्रुशोणित रञ्जितेत्यनेन शत्रुदेहोन्मज्जनत्वं व्यज्यते ॥ ३३ ॥

मू.—बृहत्त्सरुर्दूरगमा पर्वतेन्द्रविदारिणी ।
भुजद्वयप्रेरणीया युद्धे जयविधायिनी ॥ ३४ ॥

व्या.—बृहत्त्सरुः । बृहत्त्सरुः खड्गमुष्टिर्यस्य सः । "त्सरुः खड्गादिमुष्टिः स्यादि"त्यमरः । दूरं गमः गमनं यस्यास्सा दूरगमा । पर्वतेन्द्रान्विदारयतीति तथा । भुजद्वयाभ्यां प्रेरयितुं योग्या भुजद्वयप्रेरणीया ॥ ३४ ॥

मू.—तोलनं भ्रामणश्चैव वल्गनं नामनं तथा ।
मोचनं भेदनञ्चेति षण्मार्गाश्शक्तिसंश्रिताः ॥ ३५ ॥

व्या.—तोलनं प्रयत्नपूर्वकोद्यमः । वल्गनं हस्ताभ्यां धृत्वा तिर्यक् चालनम् । नामनं लक्ष्योद्देशेन मोचनार्थमधोवल्गनम् । शक्तिसंश्रिता मार्गास्साधकरूपाः ॥ ३५ ॥

मू.—द्रुघणस्त्वायसाङ्गस्स्याद्वक्रग्रीवो बृहच्छिराः ।
पञ्चाशदङ्गुल्युत्सेधो मुष्टिसम्मितमण्डलः ॥ ३६ ॥

व्या.—द्रुघणो नाम चतुरङ्गुलन्यूनहस्तद्वयमितोन्नतवक्राग्रस्थूलभागयुक्तलोहलगुडः ॥ ३६ ॥

मू.—उन्नामनं प्रपातश्च स्फोटनं दारणं तथा ।
चत्वार्येतानि द्रुघणे वल्गितानि श्रितानि वै ॥ ३७ ॥

व्या.—स्फोटनं विदलनकरणम् । श्रितान्याश्रितानि ॥ ३७ ॥

मू.—तोमरः काष्ठकायस्स्याल्लोहशीर्षस्सुगुच्छवान् ।
हस्तत्रयोन्नताङ्गश्च रक्तवर्णस्त्ववक्रगः ॥ ३८ ॥

व्या.—तोमरो नाम लोहशल्यमत्युत्तकौशेयगुच्छयुक्तत्रिहस्तोन्नतरक्तकाष्ठम् । सुगुच्छवान् कौशेयनिर्मितगुच्छवान् । अवक्रगः ऋजुगतिः ॥ ३८ ॥

मू.—उद्धानं विनिवृत्तिश्च वेधनश्चेति तत्त्रिकम् ।
वल्गितं शस्त्रतत्वज्ञाः कथयन्ति नराधिपाः ॥ ३९ ॥

व्या.—उद्धानं ऊर्ध्वतोलनम् । विनिवृत्तिः पश्चात्सरणम् । वेधनं कृन्तनम् । तत्त्रिकं तोमरवृति च तत् त्रिसङ्ख्यावच्च तादृशं वल्गितम् ॥ ३९ ॥

मू.—नलिका ऋजुदेहा स्यात्तन्वङ्गी मध्यरन्ध्रिका ।
मर्मच्छेदकरी नीला द्रौणिचापशरासनी ॥ ४० ॥

व्या.—नाळिका नाम हस्तद्वयोन्नता धमनी । तावदङ्गुलिस्थूला । द्रौणिचापाख्या । ऋजुदेहा । अवक्रकाण्डा । तन्वङ्गी । सूक्ष्ममध्यरन्ध्रकान्तर्बिलवती । मर्मभेदनी मर्मकर्तनी । नीला नीलवर्णा । द्रौणिचाप शराः कौशेयगुच्छग्रथितस्थूलसूच्यः आस्यन्त अनयेति द्रौणिचापशरासनी ॥ ४० ॥

मू.—ग्रहणं ध्मापनश्चैव स्यूतश्चेति गतित्रयम् ।
तामाश्रितं विदित्वा तु जेतासन्नान् रिपून्युधि ॥ ४१ ॥

व्या.—ध्मापनं मुखवायुपूरणम् । स्यूतं ग्रथनम् । आसन्नान्समीपवर्तिनः ॥ ४१ ॥

मू.—लगुडस्सूक्ष्मपादस्स्यात्पृथ्वंसस्स्थूलशीर्षकः ।
लोहबद्धाग्रभागश्च ह्रस्वदेहस्सुपीवरः ॥ ४२ ॥

व्या.—लगुडो नाम लोहपट्टद्वयबद्धगजदन्तः । सूक्ष्मपादः अधोभागकृशः । पृथ्वंसो बृहदूर्ध्वभागः । स्थूलशीर्षकः स्थूलतराग्रभागः ॥ ४२ ॥

मू.—दन्तकायो दृढाङ्गश्च तथा हस्तद्वयोन्नतः ।
उत्थानं पतनञ्चैव पेषणं पोथनं तथा ॥ ४३ ॥

व्या.—पेषणं घर्षणमित्यर्थः ॥ ४३ ॥

मू.—चतस्रो गतयस्तस्य पञ्चमी नेह विद्यते ।
दृढकायः पत्तिवर्गस्तेन युध्येत शत्रुभिः ॥ ४४ ॥

व्या.—दृढकायो दृढदेहः । तेन लगुडेन ॥ ४४ ॥

मू.—पाशस्सुसूक्ष्मावयवो लोहधातुस्त्रिकोणवान् ।
प्रादेशपरिधिस्सीसगुळिकाभरणान्वितः ॥ ४५ ॥

व्या.—पाशो नाम प्रादेशप्रमाणलोहतन्तुरचितसीसगुळिकायत्तोद्बन्धनविशेषः । सूक्ष्मावयवः सूक्ष्मतन्तुः । लोहधातुः लोहवाचि । नीलवर्णवान् । प्रादेशपरिधिः प्रादेशमात्रविस्तृतिः । सीसगुळिकारूपाण्येवाभरणानि । तैरन्वितः ॥ ४५ ॥

मू.—प्रसारणं वेष्टनञ्च कर्तनञ्चेति ते त्रयः ।
योगाः पाशाश्रिता लोके पाशाः क्षुद्रसमाश्रिताः ॥ ४६ ॥

व्या.—योगाः वल्गितानि । क्षुद्रसमाश्रिताः भिल्लपुलिन्दादिनीचसमीपवर्तिनः ॥ ४६ ॥

मू.—चक्रं तु कुण्डलाकारमन्ते सश्रसमान्वितम् ।
नीलीसलिलवर्णं तत्प्रादेशद्वयमण्डलम् ॥ ४७ ॥

व्या.—चक्रं नाम मध्यरन्ध्रयुक्तकुण्डलाकाराग्रातितीक्ष्णलोहफलकम् । सश्रं । अरं धारा इत्यर्थः । स्राश्रि तेन समन्वितं । नीली तन्नामिका काचन लता । तस्यास्सलिलमतिनीलमिति प्रसिद्धम् । तद्वर्णम् ॥ ४७ ॥

मू.—ग्रथनं भ्रामणश्चैव क्षेपणं परिकर्तनम् ।
दलनं चेति पञ्चैव गतयश्चक्रसंश्रिताः ॥ ४८ ॥

व्या.—ग्रथनं योजनं तर्जन्यामित्यर्थः ॥ ४८ ॥

मू.—दन्तकण्टकनामा तु लोहकण्टकदेहवान् ।
अग्रे पृथुस्सूक्ष्मपुच्छश्चाङ्गारकनिभाकृतिः ॥ ४९ ॥

व्या.—दन्तकण्टको नाम बाणप्रत्युप्तफलकविशेषः । लोहकण्टकदेहवान् उभयपार्श्वप्रत्युप्ततीक्ष्णलोहकण्टकाकारयुक्तः । अङ्गारकनिभाकृतिरग्निवर्णः । अनेन ज्ञायते ताम्रफलक इति ॥ ४९ ॥

मू.—बाहून्नतस्सुत्सरुश्च दण्डकायोऽग्रलोचनः ।
पातनं ग्रथनश्चेति द्वे गती दन्तकण्टके ॥ ५० ॥

व्या.—सुत्सरुस्समीचीनमुष्टिः दण्डकायः फलकाधारदण्डप्रधानः ॥ ५० ॥

मू.—भुशुण्डी तु बृहद्ग्रन्थिर्बृहद्देहस्सुतत्सरुः ।
बाहुत्रयसमुत्सेधः कृष्णसर्पोग्रवर्णवान् ॥ ५१ ॥

व्या.—भुशुण्डी नाम हस्तत्रयोन्नतग्रन्थियुक्तत्सरुयुतवक्रदारुः । कृष्णसर्पोग्रवर्णवान् नीलाहिवद्भयङ्करनीलवर्णवान् ॥ ५१ ॥

मू.—यापनं घूर्णनश्चेति द्वे गती तत्समाश्रिते ।
मुक्ता ह्येते समाख्याता नृपामुक्तानथो शृणु ॥ ५२ ॥

। इति वैशम्पायननीतिप्रकाशिकायां मुक्तायुधनिरूपणं नाम चतुर्थस्सर्गः ।

व्या.—यापनं प्रेरणम् । घूर्णनं मूर्छाजनकत्वम् । मुक्ता मुक्ताख्याद्यपादप्रतिपादिताः ॥ ५२ ॥

॥ इति श्रीसीतारामकृतायां नीतिप्रकाशिकातत्वविवृतौ चतुर्थस्सर्गः ॥

---

## अथ पञ्चमस्सर्गः

(अमुक्तायुधनिरूपणम्)

मू.—अमुक्तप्रथमं वज्रं वक्ष्यामि तव तच्छृणु ।
अप्रमेयबलं वज्रं कामरूपधरश्च तत् ॥ १ ॥

व्या.—अमुक्तायुधेषु प्रथमं वज्रं विशिनष्टि ब्रह्मा । वज्रं नाम शतकोटीकाण्डप्रत्यूप्तासिव्यूहसमावृतवज्रादिनवरत्नखचितत्सरुसहितमायुधम् । अप्रमेयबलं निरुपमसारम् । कामरूपधरम् इन्द्रेच्छानुरूपाकारकरणसामर्थ्यवत् ॥ १ ॥

मू.—दधीचिपृष्ठास्थिजन्यं सर्वतेजःप्रशामकम् ।
वृत्रासुरनिपातार्थं दैवतेजोपबृंहितम् ॥ २ ॥

व्या.—सर्वतेजःप्रशामकं रिपुसर्वायुधसामर्थ्यनाशकं । दैवं सकलदेवसंबन्धि यत्तेजस्तेनोपबृंहितं वर्धितम् ॥ २ ॥

मू.—कोटिसूर्यप्रतीकाशं प्रलयानलसन्निभम् ।
योजनोत्सेधदंष्ट्राभिर्जिह्वया चातिघोरया ॥

कालरात्रिनिकाशं वच्छतपर्वसमावृतम् ।
पञ्चयोजनविस्तारमुन्नतं दशयोजनम् ॥ ४ ॥

असिमण्डलसंवीतं परितस्तीक्ष्णकोटिमत् ।
तडिद्गौरेञ्च पृथुना त्सरुणा च विराजितम् ॥ ५ ॥

चालनं धूननञ्चैव छेदनं भेदनं तथा ।
वल्गितानि च चत्वारि सदा वज्रं श्रितानि वै ॥ ६ ॥

व्या.—योजनोत्सेधयुक्ताभिः योजनप्रमाणोन्नत्यसहिताभिः । उपलक्षितमिति शेषः ॥ ३ ॥

कालरात्रिर्नाम सकलजगत्संहर्त्री देवता । तथा निकाशं समानं । शतपर्वभिस्समावृतं युक्तम् । पञ्चयोजनप्रमाणविस्तृतिमत् ॥ ४ ॥

असिमण्डलैः खड्गसमूहैः । संवीतं परितो मण्डलाकारेण शाखोप- शाखितया समावृतम् । परितस्समन्तात् । तीक्ष्णकोटिमत् सिताभ्रिमत् । तटिदिव गौरं पीतवर्णवदित्यर्थः । पृथुना तादृशभारोद्वहनसमर्थेन ॥ ५ ॥

वल्गितानि चेत्यत्र चकारादपरिमितवल्गितानि ज्ञेयानि ॥ ६ ॥

मू.—ईली हस्तद्वयोत्सेधा धरुत्ररहितत्सरुः ।
श्यामा भुग्नाग्रफलका पञ्चांगुलिसुविस्तृता ॥ ७ ॥

व्या.—ईली नाम हस्तद्वयोन्नतपञ्चांगुलिविस्तृताग्रविशालकरुत्राण- रहितमुष्टियुक्तखड्गविशेषः ॥ ७ ॥

मू.—सम्पातं समुदीर्णञ्च निग्रहप्रग्रहौ तथा ।
इलीमेतानि चत्वारि वल्गितानि श्रितानि वै ॥ ८ ॥

परशुस्सूक्ष्मयष्टिःस्याद्विशालास्यः पुरोमुखः ।
अर्धचन्द्राग्रकोटिस्तु मलिनाङ्गस्फुरन्मुखः ॥ ९ ॥

त्सरुपादस्तशिखरो बाहुमात्रोन्नताकृतिः ।
पातनं छेदनञ्चेति गुणौ परशुमाश्रितौ ॥ १० ॥

पुरोमुखः धाराप्रदेशनतशीर्षः । अर्धचन्द्रवल्लोहफलकयुक्तत्सरुयुत- लोहमयद्विहस्तोत्सेधायुतायुधविशेषः। स्फुरन्मुखो द्योतमानास्यः॥ ९—१० ॥

मू.—गोशीर्षं गोशिरःप्रख्यं प्रसारितपदद्वयम् ।
अधस्ताद्दारुयन्त्राढ्यमूर्ध्वायःफलकान्वितम् ॥ ११ ॥

व्या.—गोशीर्षं नाम दारुयन्त्रसंयुक्तत्रिकोणलोहफलिकायुक्तषोडशा- ङ्गुल्युन्नतमायुधम् । गोशिरःप्रख्यं शृङ्गगोमुखाकारम् ॥ ११ ॥

मू.—नीललोहितवर्णं तत्त्रिराश्रि च सुतत्सरु ।
षोडशाङ्गुल्युन्नतञ्च तीक्ष्णाग्रं पृथुमध्यकम् ॥ १२ ॥

व्या.—नीललोहितवर्णमग्रे नीलवर्णयुक्तम् । अधस्ताद्रक्तवर्णम् । तत्त्रिराश्रि परितः कोणत्रये तीक्ष्णधारासहितम् ॥ १२ ॥

मू॰—सत्कृत्य मनवे दत्तं महेन्द्रेण समुद्रिकम् ।
प्रभुत्वसूचके लोके राज्ञां गोशीर्षमुद्रिके ॥ १३ ॥

व्या॰—मुद्रिका साक्षरोर्मिका । अङ्गुलीयमिति यावत् ॥ १३ ॥

मू॰—मुष्टिग्रहः परिक्षेपः परिधिः परिकृन्तनम् ।
चत्वार्येतानि गोशीर्षे वल्गितानि प्रचक्षते ॥ १४ ॥

व्या॰—परिधिः परितः क्षतनिमित्तं शत्रुदेहार्पणम् ॥ १४ ॥

मू॰—असिधेनुस्समाख्याता हस्तौन्नत्यप्रमाणतः ।
अतलत्रत्सरुयुता श्यामा कोटित्रयाश्रिता ॥ १५ ॥

व्या॰—असिधेनुका नाम हस्तप्रमाणछुरिका। कोटित्रये पार्श्वयोश्शिरसि चेत्यर्थः । अश्रिर्धारा यस्यास्सा कोटित्रयाश्रिता ॥ १५ ॥

मू॰—अङ्गुलिद्वयविस्तीर्णा ह्यासन्नरिपुघातिनी ।
मेखलाग्रथिनी सा तु प्रोच्यते खड्गपुत्रिका ॥ १६ ॥

व्या॰—आसन्नास्समीपवर्तिनो ये रिपवस्तान् घातयतीति तथा ॥ १६ ॥

मू॰—मुष्ट्यग्रग्रहणञ्चैव पाटनं कुन्तनं तथा ।
वल्गितत्रयवत्येषा सदा धार्या नृपोत्तमैः ॥ १७ ॥

लवित्रं भुग्नकायं स्यात्पृष्ठे गरु पुरश्शितम् ।
श्यामं पञ्चाङ्गुलिव्यामं सार्धहस्तसमुन्नतम् ॥ १८ ॥

त्सरुणा गुरुणा नद्धं महिषादिनिकर्तनम् ।
बाहुद्वयोद्यमक्षेपौ लवित्रे वल्गिते मते ॥ १९ ॥

व्या॰—लवित्रं नाम महिषादिकर्तनयोग्यः परितः पञ्चाङ्गुलिविस्तृतः सार्धहस्तसमुन्नतः खड्गः । भुग्नकायं त्सरुमारभ्याग्रपर्यन्तं नतः कायो यस्य तत् । पृष्ठभागे गुरु स्थूलम् । पुरः उदरे शितं तीक्ष्णम् ॥ १७—१९ ॥

मू॰—आस्तरो ग्रन्थिपादस्स्याद्दीर्घमौलिर्बृहत्करः ।
भुग्नहस्तोदरासितः श्यामवर्णो द्विहस्तकः ॥ २० ॥

व्या—आरतरो नाम गलकर्तनयोग्यबृहदङ्कुशः । ग्रन्थिपादः जम्बीरमात्रमितलोहग्रन्थियुक्तमूलः । भुग्नहस्तो नतकरः । उदग्राशितः अधस्तीक्ष्णः ॥ २० ॥

मू—भ्रामणं कर्षणश्चैव त्रोटनं तत्त्रिवल्गितम् ।
ज्ञात्वा शत्रून् रणे हन्याद्धार्यस्सादिपदातिकैः ॥ २१ ॥

व्या—त्रोटनं कर्तनम् । सादिनो गजारोहाः ॥ २१ ॥

मू—कुन्तस्त्वयोमयाङ्गस्स्यात्तीक्ष्णशृङ्गष्षडाश्रिमान् ।
पञ्चहस्तसमुत्सेधो वृत्तपादो भयङ्करः ॥ २२ ॥

व्या—कुन्तो नाम वर्तुलाकारपादयुक्तपञ्चहस्तोन्नततीक्ष्णाग्रलोहदण्डः । षडाश्रिमान् हस्तप्रमाणाग्रभागे षट्कोणवान् ॥ २२ ॥

मू—उड्डीनमवडीनञ्च निडीनं भूमिलीनकम् ।
तिर्यग्लीनं निखातञ्च षण्मार्गाः कुन्तमाश्रिताः ॥ २३ ॥

व्या—उड्डीनमूर्ध्वप्लवनम् । अवडीनमधःप्लवनम् । निडीनं पार्श्वप्लवनम् । भूमिलीनकं हस्ताभ्यां शिरसा च भूस्पर्शनम् । तिर्यग्लीनं पार्श्वाभ्यां भूमिस्पर्शः । निखात कुन्तनम् ॥ २३ ॥

मू—स्थूणस्तु रक्तलोहस्स्यात्समीपदृढपर्वकः ।
पुम्प्रमाण ऋजुस्तस्मिन्भ्रमणं पातनं द्वयम् ॥ २४ ॥

व्या—स्थूणो नाम समीपपर्वसहितपुरुषप्रमाणोन्नतहस्तस्थूलवेणुदण्डः ॥ २४ ॥

मू—प्रासस्तु सप्तहस्तस्स्यादौन्नत्येन तु वैणवः ।
लोहशीर्षस्तीक्ष्णपादः कौशेयस्तबकाश्रितः ॥ २५ ॥

व्या—प्रासो नाम मूलाग्रयोर्लोहशल्ययुक्तसप्तहस्तोत्सेधयुतरक्तवेणुदण्डः । कौशेयानि क्रिमिकोशोत्थसूत्राणि । तैर्निर्मितो यः स्तबकः पुञ्जस्तेनाश्रितः शल्याधोभागालङ्कृतः ॥ २५ ॥

मू—आकर्षश्च विकर्षश्च धूननं वेधनं तथा ।
चतस्र एता गतयो रक्तप्रासं समाश्रिताः ॥ २६ ॥

पिनाकस्तु त्रिशीर्षस्स्यात्सिताग्रः क्रूरलोचनः ।
कांस्यकायो लोहशीर्षश्चतुर्हस्तप्रमाणवान् ॥ २७ ॥

ऋक्षरोमस्तबकझल्लीवलयश्रीवदेहवान् ।
धूननं भेदनश्चेति त्रिशूलं द्वे श्रिते गती ॥ २८ ॥

व्या.—पिनाको नाम लोहमयत्रिशीर्षयुतकांस्यदण्डस्यूनझल्लीवलयसमेत-ऋक्षरोमस्तबकयुक्तहस्तचतुष्टयोन्नतकांस्याधोभागयुतदण्डः । 'पिनाकोऽस्त्री रुद्रचापे पांसुवर्षत्रिशूलयः' इति मेदिनी। कांस्यकङ्कणका तत्तु झल्लीवलयसंमितम् इति च मेदिनी ॥ २७—२८ ॥

मू.—गदा शैक्यायसमयी शतारपृथुशीर्षका ।
शङ्कुप्रावरणा घोरा चतुर्हस्तसमुन्नता ॥ २९ ॥

व्या.—गदा नाम बृहद्ग्रन्थिशीर्षयुक्ता चतुर्हस्तोन्नतदृढत्सरुयुतातिगुरुर्लोहदण्डः । शतारपृथुशीर्षका शतकोणयुक्तबृहद्ग्रन्थिशीर्षका।शङ्कुप्रावरणा अग्रे लोहशङ्कुप्रत्युप्ता ॥ २९ ॥

मू.—रथाक्षमात्रकाया च किरीटाञ्चितमस्तका ।
सुवर्णमेखला गुप्ता गजपर्वतभेदिनी ॥ ३० ॥

व्या.—सुवर्णमेखला महारजतपट्टबद्धा ॥ ३० ॥

मू.—मण्डलानि विचित्राणि गतप्रत्यागतानि च ।
अस्त्रयन्त्राणि चित्राणि स्थानानि विविधानि च ॥ ३१ ॥

व्या.—अस्त्रयन्त्राणि अस्त्रवदग्न्यादिनिर्माणप्रयुक्तप्रेरणानि । विचित्राण्दाश्चर्यजन्मस्थानि विलक्षणोपदेशानि ॥ ३१ ॥

मू.—परिमोक्षं प्रहाराणां वर्जनं परिधावनम् ।
अभिद्रवणमाक्षेपमवस्थानं सविग्रहम् ॥ ३२ ॥

वर्जनं व्यंसनम् । परिधावनं पृष्ठपलायनम् । अभिद्रवणं शत्रूद्देशेन द्रुतगमनम् । आक्षेपं भीतिजननार्थं सभ्रूभङ्गवल्गनम् । विग्रहः शत्रुदेहमेळनकरणम् ॥ ३२ ॥

मू.—परावृत्तं सान्निवृत्तमवप्लुतमुपप्लुतम् ।
दक्षिणं मण्डलञ्चैव सव्यं मण्डलमेव च ॥ ३३ ॥

व्या.—परावृत्तं पृष्ठभ्रमणम् । सान्निवृत्तं पुरो भ्रमणम् । अवप्लुतं स्वोपरि शत्रोः प्लवनम् । उपप्लुतं शत्रूपरि स्वप्लवनम् । दक्षिणमण्डलं प्रदाक्षिणकरणम् ॥ ३३ ॥

मू.—आविद्धश्च प्रविद्धञ्च स्फोटनञ्ज्वालनं तथा ।
उपन्यस्तमपन्यस्तं गदामार्गाश्च विंशतिः ॥ ३४ ॥

व्या.—आविद्धमीषद्घातः । प्रविद्धं प्रबलाघातः । स्फोटनं बाहुशब्दकरणम् । ज्वालनं कोपकारणम् । उपन्यस्तं स्वगदोपरि परगदाघातग्रहणम् । अपन्यस्तं तद्गदोपरि स्वगदाघातः । अत्रायुधवर्णितेषु क्वचित् किञ्चिद्भेदः स्वमत्योन्नेयः ॥ ३४ ॥

मू.—मुद्गरस्सूक्ष्मपादस्स्याद्धीनशीर्षस्त्रिहस्तवान् ।
मधुवर्णः पृथुस्कन्धश्चाष्टभारगुरुश्च सः ॥ ३५ ॥

व्या.—मुद्गरो नाम त्सरुसहितबृहच्छङ्कुरूपी । हीनशीर्षो विगताशिखः सम्यक्कृत्ताग्रभाग इत्यर्थः । अष्टभारगुरुर्भाराष्टकमितगुरुत्ववान् ॥ ३५ ॥

मू.—सत्सरुर्वर्तुलो नीलः परिध्याकारसम्मितः ।
भ्रमणं पातनञ्चेति द्विविधं मुद्गरे श्रितम् ॥ ३६ ॥

व्या.—नीलः कृष्णदारुनिर्मितत्वात् । सत्सरुरेककरसम्मितमण्डलः । तद्धस्तक्रमेण द्विचतुःपञ्चमितपरिधिरिति ज्ञेयः ॥ ३६ ॥

मू.—सीरो द्विवक्रो विशिखो लोहपट्टमुखः कृषन् ।
पुम्प्रमाणस्निग्धवर्णस्त्वाकर्षविनिपातवान् ॥ ३७ ॥

व्या.—सीरो नाम हलः । विशिखविशिखाराहितः । कृषन् कर्षणसामर्थ्यवान् ॥ ३७ ॥

मू.—मुसलं त्वक्षिशीर्षाभ्यां करैः पादैर्विवर्जितम् ।
मूले चान्तेऽतिसम्बन्धः पातनं पोथनं द्वयम् ॥ ३८ ॥

व्या.—मुसलः प्रसिद्धः ॥ ३८ ॥

मू.—पट्टिशः पुम्प्रमाणस्स्याद्द्विधारस्तीक्ष्णशृङ्गकः ।
हस्तत्राणसमायुक्तमुष्टिः खड्गसहोदरः ॥ ३९ ॥

व्या —पट्टिशो नाम ऋजुदेहोभयपार्श्वधारासहितहस्तत्राणसमेतत्सरुयुतखड्गविशेषः । खड्गसहोदरस्तद्वल्लिगनवान् ॥ ३९ ॥

मू.—मौष्टिकं सुत्सरु ज्ञेयं प्रादेशोन्नतिभूषितम् ।
सिताग्रमुन्नतग्रीवं पृथूदरसितं तथा ॥ ४० ॥

व्या.—मौष्टिकं नाम मल्लैः हस्तधार्या छुरिका । सुसमीचीनमुष्टियुक्तः यः स सुत्सरुरुच्यते । "त्सरुः खड्गादिमुष्टिस्स्यादि"त्यमरः । पृथूदरसितमुन्नतोदरभागधारावत् ॥ ४० ॥

मू —मण्डलानि विचित्राणि स्थानानि विविधानि च ।
गोमूत्रकाणि चित्राणि गतप्रत्यागतानि च ॥ ४१ ॥

व्या.—विचित्राणि मण्डलानि चारीकरणखण्डमहामण्डलाख्यमण्डलभेदात् । तानि तु—"एकपादप्रचारेण चारीसंज्ञं तु मण्डलम् । द्विपादक्रमणं यत्र करणाख्यं तु मण्डलम्" करणानाञ्च संयोगात्खण्डमण्डलमीरितम् । खण्डैस्त्रिभिश्चतुर्भिर्वा महामण्डलमुच्यते" इति भारतोक्तानि । विविधानि स्थानानि । "वैष्णवं समपादञ्च वैशाखं मण्डलन्तथा । प्रत्यालीढमनालीढं स्थानान्येतानि षण्णृणाम्" ॥ इति भारतशास्त्रोक्तानि । एतानि पादयोः पूर्वापरनिक्षेपतिर्यग्विक्षेपादिविन्यासविशेषरूपाणीत्यर्थः । गोमूत्ररेखारूपकुटिलगमनानि । चित्राणि गतप्रत्यागतानि नानाप्रकारोपसर्पणापसर्पणानि ॥ ४१ ॥

मू.—तिरश्चीनगतान्येव तथा वक्रगतानि च ।
परिमोक्षं प्रहाराणां वर्जनं परिधावनम् ॥ ४२ ॥

व्या.—तिरश्चीनगतानि वक्रगतानि । सव्यापसव्यसञ्चरणानि । प्रहाराणां परदत्तप्रहाराणां परिमोक्षं स्थानचलनादिना व्यर्थीकरणम् । वर्जनं स्वप्रहारवैफल्यापदकस्थाने तद्वर्जनम् । परिधावनमेकस्य तिष्ठतः परितो धावनम् । भ्रमणमित्यर्थः ॥ ४२ ॥

मू.—अभिद्रवणमाछावमवस्थानं सविग्रहम् ।
परावृत्तमपावृत्तमपद्रुतमवप्लुतम् ॥ ४३ ॥

उपन्यस्तमपन्यस्तमाघातं स्फालनं तथा ।
एतानि वल्गितान्याहुर्मौष्टिके नृपसत्तम ॥ ४४ ॥

व्या.—अभिद्रवणमाभिमुख्येन शीघ्रगमनम् । आछावमीषत्क्रमनम् । अवस्थानं यद्वायद्वाऽवस्थितिः । सविग्रहं विगृह्याभिमुख्यनोवस्थानम् । परावृत्तं पराङ्मुखगमनम् । अपावृत्तं पार्श्वतोऽपसरणम् । अपद्रुतं परस्परजान्वादिग्रहायावनतकायतया धावनम् । अवप्लुतं मण्डूकवदुत्प्लवनम् ॥ ४३ ॥

उपन्यस्तं प्रसारितशत्रुबाहुग्रहणम् । अपन्यस्तं प्रतिभटबाहुग्रहणार्थं स्वबाहुप्रसारणम् । आघातं शत्रुभुजेन साकं स्वभुजाघातः । स्फालनमूरुभुजयोश्शब्दकरणम् । मौष्टिके इति तथाविधायुधकरणकयुद्धे एतानि वल्गितानीत्यन्वयः ॥ ४४ ॥

मू.—परिघो वर्तुलाकारस्तालमात्रस्सुतारवः ।
बलैकसाध्यसम्पातस्तस्मिन् ज्ञेयो विचक्षणैः ॥ ४५ ॥

व्या.—परिघो नाम बृहत्कवाटोद्घाटनप्रतिबन्धककार्यर्गलविशेषः । "परिघो योगभेदेऽस्यान्मुद्गरोऽर्गलघातयो"रिति विश्वः । वर्तुलाकारः कोटिरहितः । तालमात्रश्चतुर्हस्तप्रमाणोन्नतिमान् । "चतुर्हस्तस्तालमात्रः" इति वैजयन्ती । सुतारवो दृढवृक्षजन्यः । बलैकसाध्यसम्पातः महाबलमात्रनिर्वाह्यघातनाख्यवरितवान् ॥ ४५ ॥

मू.—मयूखी कृतयष्टिः स्यान्मुष्टियुक्ता नरोन्नता ।
किङ्किणीसंवृता चित्रा फलिकासहचारिणी ॥ ४६ ॥

व्या.—मयूखी नाम क्षुद्रघण्टिकासहितस्सरुयुतनरोन्नतवेणुदण्डः । फलिका नेत्रत्वङ्निर्मितखेटकम् । तया सहचरतीति तथा । 'फलिका नेत्रविदलग्रथिताघातवारिणी' इति केशवः ॥ ४६ ॥

मू.—आघातश्च प्रतीघातं विघातं परिमोचनम् ।
अभिद्रवणमित्येते मयूर्दी पञ्च संश्रिताः ॥ ४७ ॥

व्या.—"प्रतिघातं प्रतीघातमिति" द्विरूपकारः । पञ्चयोगा इति शेषः ॥ ४७ ॥

मू.—शतघ्नी कण्टकयुता कालायसमयी दृढा ।
मुद्गराभा चतुर्हस्ता वर्तुला त्सरुणा युता ॥ ४८ ॥

व्या.—शतघ्नी नाम शतमेकप्रयोगेन हन्तीति व्युत्पत्त्या लोहकण्टकप्रत्युप्तकालायसमयमुद्गराभा गदा ॥

"शतघ्नी च चतुर्हस्ता लोहकण्टकिनी गदा" इति वैजयन्ती ॥

"शतघ्नी च चतुर्हस्ता लोहकण्टकसञ्चिता । यष्टि"रिति केशवश्च ॥

"चतुष्काधिकविंशत्या स्वङ्गुलैर्हस्तकल्पना ।
सहस्रैरष्टभिः ख्यातं हस्तकैः कोशमानकम् ॥"

इति त्रिकाण्डशेषः । कालायसमयी अश्मसारविकारा । कालायसं दृढलोहः । "कालयसश्चाश्मसारो दृषद्भेदिमुलोहक"मिति केशवः । त्सरुणा मुष्टिना ॥ ४८ ॥

मू.—गदा वल्गितवत्येषा मयेति कथिता तव ।
अमून्यमुक्तायुधानि विंशतिर्नृपसत्तम ॥ ४९ ॥

व्या.—गदायां यानि वल्गितानि तावद्वल्गितवत्येषा शतघ्नी । इतिशब्दस्समाप्तिवाचकः ॥ ४९ ॥

मू.—मुक्तामुक्तपदोक्तानि द्वात्रिंशदिति निर्णयः ।
ब्रह्मणा निर्मितः खड्गः पृथक् ते परिकीर्तितः ॥ ५० ॥

व्या.—मुक्तामुक्ताख्ये द्वे पदे । तयोरुक्तानीति पूर्वोक्तप्रकारेण द्वात्रिंशदायुधानीति शेषः । ते जनमेजयाख्यस्य तव । पृथक् द्वात्रिंशदायुधाधिकतया ॥ ५० ॥

मू.—एतानि विकृतिं यान्ति युगपर्यायतो नृप ।
देहदार्ढ्यानुसारेण तथा बुद्ध्यनुसारतः ॥ ५१ ॥

यन्त्राणि लोहसीसानां गुलिकाक्षेपकाणि च ।
तथा चोपलयन्त्राणि कृत्रिमाण्यपराणि च ॥ ५२ ॥

कूटयुद्धसहायानि भविष्यन्ति कलौ नृप ।

व्या.—एतानि खड्गेन सह त्रयस्त्रिंशत्संख्याकानि । विकृतिं रूपाकारसामर्थ्यभेदरूपां । युगपर्यायतस्त्रेतादिव्यत्यासात् । बुद्ध्यनुसारतश्शूरबुद्ध्यनुरोधेन ॥ ५१ ॥

लोहसीसानां गुलिकाप्रक्षेपकाणि यन्त्राणि । बहुलोहानिर्मित-सचूर्णनलिकारूपाणि । "चूर्णः क्षोदे च पिष्टे च शकले पांसुकल्पयोः । लोहाभिसारिके चैव पुष्पधूपे च वर्तते" इति केशवः । उपलयन्त्राणि पाषाणाक्षेपकाणि । अपराणि सेतुशलाका-दीनि ॥ ५२ ॥

कूटयुद्धं सङ्कुलयुद्धम् ॥

मू.—तप्ततैलं सर्जरसो गुडलालोग्रवालुका ॥ ५३ ॥
मधु साशीविषघटाबडिशानि बृहच्छिलाः ।

क्रकचा धूमगुलिकास्तुषाङ्गारादिकं तथा ॥ ५४ ॥

अधर्मवृद्ध्या चैतानि भविष्यन्त्युत्तरोत्तरम् ।
साधनानि महीपाल कूटयुद्धाभिकांक्षिणाम् ॥ ५५ ॥

व्या.—तप्ततैलं क्वथिततैलम् । गुडलाला सद्रवगुडम् । उग्रवालुका तप्तसिकता ॥ ५३ ॥

मधु क्षौद्रम् । साशीविषघटः ससर्पकलशः । बडिशं दन्तोत्पाटक-शङ्कुविशेषः । कीलकवाच्याः बृहच्छिलाः पृथूपलाः । क्रकचाश्शरपत्राणि । धूमगुलिका धूमचूर्णगुलुच्छानीति यावत् । "अन्तरुद्भूतसारं यत्तद्गुलुच्छ-मुदाहृतम्" इति वामनः । शत्रुसम्मर्देषु स्वस्फुटनेन धूमोत्पादक किट्टचूर्णमञ्जूषाः । तुषाङ्गारादि मुर्मुराग्न्यादि । एतत्सम्पादनं राज्ञां दुर्नीतोद्रेक? . . . . . . . . . . . . . . शत्रुदेहोपरि क्षेपतत्पाद-स्खलनादिना तदपसारणार्थम् ॥ ५४ ॥

अधर्मस्य वृद्ध्या धर्मस्य ह्रासेन चेत्यर्थः । कूटयुद्धाकाङ्क्षिणामेनानि साधनानि । उत्तरोत्तरं त्रेताद्वापरकलिषु भविष्यन्तीत्यन्वयः ॥ ५५ ॥

मू.—हूणाः पुलिन्दाश्शबराः बर्बराः पह्लवाश्शकाः ।
मालवाः कोंकणा ह्यान्ध्राश्चोलाः पाण्ड्याः सकेरलाः ॥ ५६ ॥

म्लेच्छा गोयोनयश्चान्ये चण्डालाश्श्वपचाः खलाः ।
भविल्लका ललित्थाश्च किराताः कुक्कुरास्तथा ॥ ५७ ॥

पापा ह्येते कथं धर्मं वेत्स्यन्ति च वियोनयः ।
साङ्कर्यदोषनिरता भविष्यन्त्यधर्मे युगे ॥ ५८ ॥

व्या.—हूणाद्यन्त्यजादिभटानां धर्मज्ञाने सामर्थ्याभावं कथयितुं तान्निर्दिशति हूणा इत्यादिना ॥ ५६ ॥

गोयोनयः नन्दिन्युद्भूताः ॥ ५७ ॥

वियोनयो विरुद्धयोनिजन्याः ।

धर्माज्ञाने करणमाह साङ्कर्यदोषः विलोमयोनिसंपर्कजन्यदोषः । तस्मिन्निरता आसक्ताः । तथा च दुष्टानां न धर्मबुद्धिरिति भावः । साङ्कर्यदोषवृषला इति पाठे साङ्कर्यदोषेणान्यवर्णीयधर्माचरणप्रत्यवायेन वृषला धर्मलोपकाः । "वृषो हि भगवान् धर्मस्तस्य यः कुरुते ह्यलम् । वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेदि"ति मनुः ॥ ५८ ॥

मू.—इत्येतत्कथितं वत्स मया लोकहितैषिणे ।
तुभ्यं शुश्रूषवे धर्मान् किं भूयः कथयाम्यहम् ॥ ५९ ॥

इति वैशम्पायननीतिप्रकाशिकायाममुक्तायुधनिरूपणं
नाम पञ्चमस्सर्गः ॥

व्या.—स्वोक्तिं निगमयति ब्रह्मा इतीति ॥ ५९ ॥

इतिश्रीसीतारामकृतायां नीतिप्रकाशिकातत्वविवृतौ
पञ्चमस्सर्गः ॥

---

## अथ षष्ठस्सर्गः

### (सेनानयनकथनम्)

मू.—अथ व्यूहान्प्रवक्ष्यामि शत्रुसैन्यप्रमर्दनान् ।
बलाङ्गासङ्कुलार्थाय शत्रुसम्मोहनाय च ॥ १ ॥

व्या.—व्यूहान् बलविन्यासान् । "व्यूहस्तु बलविन्यासः" इत्यमरः । बलाङ्गानां रथगजतुरगपत्तिरूपाणाम् । असङ्कुलार्थायासम्मर्दननिमित्तम् । ॥ १ ॥

मू.—स्वशक्त्युपचयं ज्ञात्वा रिपुव्यसनमेव च ।
शत्रोस्त्रिगुणसैन्येन व्यूह्य सेनामरिं व्रजेत् ॥ २ ॥

व्या.—उपचयं वृद्धिम् । व्यसनमपचयम् । शत्रोस्तत्सम्बन्धिनः । सैन्येन सेनास्थजनसमूहेन । व्यूह्य योजयित्वा ॥ २ ॥

मू.—दण्डो भोगोऽसंहतश्च मण्डलव्यूह एव च ।
व्यूहाश्चत्वार एवैते तेषु भेदान् ब्रवीम्यहम् ॥ ३ ॥

व्या.—व्यूहाः मुख्यव्यूहाः । भेदानवान्तरव्यूहान् ॥ ३ ॥

मू.—प्रदरो दृढकस्सत्यश्चापमस्वक्षिरेव च ।
सुप्रतिष्ठोऽप्रतिष्ठश्च श्येनो विजयसञ्जयौ ॥ ४ ॥
विशालो विजयस्सूचीस्थूणोऽकर्णश्चमूमुखः ।
सुखास्यो विजयश्चेति दण्डस्सप्तदशात्मकः ॥ ५ ॥

व्या.—प्रथमोद्दिष्टदण्डव्यूहस्य सप्तदशावान्तरभेदानाह द्वाभ्याम् ॥ ४—५ ॥

मू.—गोमूत्रिका हंसिका च सञ्चारी शकटस्तथा ।
एवं कपतन्तीति भोगभेदास्तु पञ्च वै ॥ ६ ॥

व्या.—भोगव्यूहस्य पञ्चविधत्वमाहैतेन ॥ ६ ॥

मू.—अर्धचन्द्रकटङ्कारो वज्रश्शार्कटकस्तथा ।
शृङ्गी च काकपादी च गोधिकेत्यपरस्स्मृतः ॥ ७ ॥

असंहतष्षाड्विधः स्यादित्याहुर्व्यूहकोविदाः ।
सर्वभद्रो दुर्जयश्च मण्डलोऽपि द्विधा इति ॥ ८ ॥

व्या.—असंहतव्यूहस्य षड्विधत्वमाहार्धचन्द्रेत्यादिना सार्धश्लोकेन । अपरस्तृतीयः मण्डलद्वैविध्यं सर्वभद्रेत्यादिना । इतीति मुख्यव्यूहभेदाः ॥ ८ ॥

मू.—वराही मकरव्यूहो गारुडः क्रौञ्च एव च ।
पद्माद्याश्चाङ्गवैकल्याद्देतेभ्यस्ते पृथक् स्मृताः ॥ ९ ॥

व्या.—अङ्गवैकल्यात् रथगजादिसेनाङ्गस्य व्यत्यासेन । रादित्याद्वा प्रदरादित्रिंशद्भेदाभिन्नेभ्यः । पृथग्भिन्नाः ॥ ९ ॥

मू.—रक्षो देवमनुष्याणां बुद्धिवैचित्र्यनिर्मिताः ।
व्यूहास्सहस्रशो राजान्निति ज्ञेया मनीषिभिः ॥ १० ॥

व्या.—रक्षःपदं दैत्यदानवभूतप्रेतपिशाचासुरोपलक्षकम् । देवपदं गन्धर्वकिन्नरकिंपुरुषसिद्धविद्याधरोपलक्षकम् । इति मनीषिभिर्ज्ञेयाः इति योजना ॥ १० ॥

मू.—उरः कक्षौ च पक्षौ च मध्यं पृष्ठः प्रतिग्रहः ।
कोटी च व्यूहशास्त्रज्ञैस्सप्ताङ्गो व्यूह उच्यते ॥ ११ ॥

व्या.—उर इत्युरोभागस्थितव्यूहः । कक्षावुरस्थोभयपार्श्वस्थितव्यूहौ । एतौ द्वावेकतया वा पार्श्वव्यूहयोरग्रे स्थितप्रपक्षापरनामकव्यूहौ कोटी । इमे द्वे एकाङ्गत्वेनेष्येते । एवं व्यूहस्य सप्ताङ्गत्वम् ॥ ११ ॥

मू.—अग्रे नागान् रथान्पश्चात्पार्श्वयोस्तुरगान्नृपः ।
पदातीन्पृष्ठतो व्यूहे चारयन् विजयी भवेत् ॥ १२ ॥
तत्तत्कार्यानुसारेण रथान्नागांस्तुरङ्गमान् ।
नरानश्वान् रथान्नागान्नरानश्वान्रथांस्तथा ॥ १३ ॥

व्या.—सेनाङ्गचालनक्रममाह अग्रे-इति । अथाग्रे चारयान्निति पूर्वेण सम्बध्यते ॥ १२—१३ ॥

मू.—गजांश्चाग्रे प्रेषयेच्च योजयित्वा यथाक्रमम् ।
देशकालौ निरीक्ष्यैव परिवारसमन्वितान् ॥ १४ ॥

सर्वाभिसारसहितो यात्रोद्युक्तो नृपोत्तमः ।

प्रचक्रममथो दृष्ट्वा प्रसारे विनियोजयेत् ॥ १५ ॥

व्या॰—पक्षपार्श्वव्यूहौ। एतद्वितयमध्य एकतयेष्टम्। मध्यमुरः पृष्ठतोऽवस्थितमनीकं मध्यम् पृष्ठः मध्यस्यापि पृष्ठतोऽवस्थितं पृष्ठमुच्यते। प्रतिग्रहः प्रतिष्ठाख्यानिका तद्द्विशतधनुर्व्यवहितं राजावस्थानं प्रतिग्रहः। कोटिपार्श्वकाग्रं नाग्रभागे योजयित्वा सज्जान् कृत्वा यथाक्रमं ध्वजपताकागजप्रेषणपूर्वकं। देशकालौ शत्रुदेशतज्जयकालौ। परिवाराः पादरक्षकाः। तद्युक्तान् ॥ १२—१४ ॥

सर्वाभिसारेण युद्धोद्युक्तसैन्येन। सर्वाभिसारस्सर्वौघस्सर्वसन्नहनार्थक" इत्यमरः। यात्रा जिगीषुराजयानम्। यात्रा प्रव्रजनामित्यमरः। प्रचक्रमम् परितः प्रचलितसैन्यम्। प्रसार अग्रतो व्याप्तौ। "प्रसारस्त्वग्रतो व्याप्तिरि" ति मेदिनी ॥ १५ ॥

मू॰—अभिषेणनमन्विच्छन्नभिक्रममथाचरेत् ।

सन्नाहिणः कौक्षिकांश्च जङ्घालाननुगामिनः ॥ १६ ॥

ऊर्जस्वलान्सांयुगीनान्सैन्यमध्ये प्रचारयेत् ।

व्या॰—अभिषेणनं सेनया सह शत्रूपरि गमनम्। "यत्सेनयाभिगमनमरौ तदभिषेणन" मित्यमरः। अभिक्रमं निर्भयेन शत्रोरभिमुखगमनम्। सन्नाह आयुधस्खलनप्रतिबन्धकमणिबन्धबद्धचर्म। स येषामस्तीति ते तथा। कुक्षिश्चर्मनिर्मितकोशः। तत्रत्यः खड्गः स येषां ते कौक्षिकाः। खड्गिनः इत्यर्थः। जङ्घाला अतिजवाः। अनुगामिनः युद्धे यथेच्छं जिगमिषवः। "कामं गाम्यनुगामिन" इत्यमरः। तानूर्जस्वलान् बलिनः सांयुगीनान्युद्धसमर्थान् ॥ १६ ॥

मू॰—उद्धान्तं हारितकश्चापि घण्टापथचरं भवेत् ॥ १७ ॥

बालान् पोतांश्च कलभान् विक्कांश्चैवोपवाह्यकान्

मदोत्कटांश्च कलभान् सान्नाह्यानेव कारयेत् ॥ १८ ॥

व्या.—उद्वान्तं निर्मदं समं । "उद्वान्तनिर्मदा" नित्यमरः । हास्तिकं गजव्यूहसमूहम् । "हास्तिकं गजता वृन्द" इत्यमरः । घण्टापथः शतधनुः परिणाहराजमार्ग इत्यर्थः । अत्र चरं सञ्चारयोग्यं कुर्यादित्यर्थः । एतेन युद्धकालेऽपि राजमार्गा व्यूहकल्प्या इति भावो व्यज्यते ॥ १७ ॥

बालान् पञ्चवार्षिकान् । पोतान् दशवार्षिकान् कलभांस्त्रिंशद्वर्षान् । विक्कान् विंशतिवार्षिकान् । उपवाह्यकान् राजवहनोचितान् । मदोत्कटानुत्कटमदवतः कलभान् गजशिशून् । एतानेतान्सर्वानित्यर्थः । सान्नाह्यान्युद्धसन्नद्धान् । कारयेदेवेति योजना ॥ १८ ॥

मू—वीतमन्तःपुरश्चैव पृष्ठ्यान्वै प्रातिवेश्यकान् ।
शाखानगरवासांश्च राजधानीवाणिग्जनान् ॥ १९ ॥
सौविदल्लान्वर्षवरान् वृद्धान् बालांश्च रोगिणः ।
सक्षतानक्षिरहितान् पङ्गून् व्यङ्गान् सुदुर्बलान् ॥ २० ॥
तथा पुष्यरथांश्चैव भद्रासनयुतानपि ।
प्रक्रियानुप्लवांश्चैव युद्धोपकरणानि च ॥ २१ ॥
कोष्ठागारायुधागारयन्त्रागाराणि यानि च ।
मन्थरान् धान्यकोशाश्च यच्चान्यत्कृशदुर्बलम् ॥ २२ ॥
प्रतिग्रहे वासयेच्च योधासम्मर्दहेतवे ।
तस्य रक्षाश्च विधिवच्छूरैः कुर्यान्नराधिपैः ॥ २३ ॥

व्या.—वीतं युद्धासमर्थम् । "वीतन्त्वसार"मित्यमरः । अन्तःपुरं राजप्रतिग्रहः । पृष्ठ्यान्पृष्ठतोऽवस्थानोचितान् । प्रातिवेश्यकानवरोधवध्वादिरक्षणसहायान् । शाखानगरवास्तव्यान् प्रधाननगरसम्मर्देन बहिर्बद्धतुच्छग्रामस्थान् । वणिग्जनान्व्यापारिजनान् ॥ १९ ॥

सौविदल्लान् कञ्चुकिनः । वर्षवरान् षण्डान् । "षण्ढो वर्षवरस्तुल्या" वित्यमरः । सक्षतान् शस्त्रकर्तनसहितान् । व्यङ्गान्विरुद्धाङ्गान् । सञ्चारप्रतिबन्धस्थूलवृषणगुदशलाद्युशाद्युक्त्वत इत्यर्थः ॥ २० ॥

पुष्यरथान्यात्रामात्रोपयोगिरथान् । "असौ पुष्यरथश्चक्रयानं न समराय यत् ।" इत्यमरः । भद्रासनानि राजोपवेशयोग्यपीठानि । तद्युतनरानिति शेषः । प्रक्रियानुष्ठवान् । प्रक्रियाधिकारो येषान्ते च तेऽनुप्लवा अनुगामिनश्च तान् "प्रक्रिया त्वधिकारःस्या" दित्यमरः ॥ २१ ॥

कोष्ठागाराणि कुशूलान्तर्गृहादीनि । यन्त्रागाराणि लोहगुलिकाक्षेपकनालिकाद्यगाराणि । "मन्थरान् मन्दगामिनः मन्दगामी तु मन्थर" इत्यमरः । धान्यकोशं धान्यागारम् । कृशश्च तद्दुर्बलश्चेति समानाधिकरणेन समासः ॥ २२ ॥ प्रनिग्रहे बृहत्सैन्यपृष्ठस्वल्पसैन्ये वासयेत् । तत्र हेतुः ॥ योधानामसम्मर्दनिमित्तमिति ॥ २३ ॥

मू.—ऊर्जस्वलांश्च जङ्घालानभ्यमित्रियकांस्तथा ।
आत्यन्तिकान् स्पशान्दूतांश्चैत्रान्सांयुगिकांस्तथा ॥ २४ ॥

जैत्रध्वजपताकञ्च स्वगजञ्च महोन्नतम् ।
नासीरे प्रेषयेदेतानूर्जस्वद्भिर्बलैस्सह ॥ २५ ॥

व्या—ऊर्जस्वलान् बलिनः । जङ्घालानतिजवान् । अभ्यमित्रीयकानाभिमुख्येन शत्रूनलं गच्छन्तीति तान् । आत्यन्तिकान्युद्धे यथेच्छगन्तॄन् । दूतान्वार्ताहारकान् । जैत्राञ्जेतुं शीलवतः । सांयुगीनान्युद्धसमर्थान् ॥ २४ ॥

जैत्रो जयशीलो यो ध्वजः केतनापरपर्यायपताकाधारदारुविशेषः । तस्मिन्विद्यमाना पताका वैजयन्ती यस्मिन् सः । तादृशं महोन्नतमत्युन्नतम् । स्वगजं राजहस्तिनमिति योजना । नासीरे सेनामुखे । "सेनामुखन्तु नासीरमिति" मेदिनी । ऊर्जं धैर्यमेषां तान्यूर्जस्वन्ति । तैर्बलैस्सैन्यैः । "वरूथिनी बलं सैन्य" मित्यमरः ॥ २५ ॥

मू.—पुरोगानुचरांश्चैव सहायाभिचरांस्तथा ।
पृष्ठांश्च जाङ्घिकांश्चैव वेत्रिणोऽनुप्लवांस्तथा ॥ २६ ॥

असिचर्मधरांश्चैव शंसकान्मागधांस्तथा ।
स्वपुरश्चारयेद्राजा स्वसंरक्षणकारणात् ॥ २७ ॥

व्या.—पुरोगाः अग्रे गन्तारः। तत्सहिता येऽनुचराः। पृष्ठरक्षका इति यावत्। तान्। सहायास्सहैवागन्तारः। अभिचरा अभित आगन्तारः। पृष्ठाः प्रतिष्ठन्ति अग्रे गच्छंतीति व्युत्पत्त्या कार्यकरास्तान्। जाङ्घिकाः। जङ्घया जीवति यः सः जाङ्घिकः। सुदूरं गत्वा तत्रत्य-वार्तां राज्ञे निवेद्य तस्मात्पारितोषिकं गृहीत्वा तेन जीविनः तान्। वेत्रिणः यष्टिधरानित्यर्थः। अनुप्लवान् शुचीन् दूरे पृष्ठभागे सहायार्थ-मागच्छतः ॥ २६ ॥

चाक्रिकान् पुञ्जीभूय स्तुवन्तः मागधान् वंशावलिप्ररतावकान् ॥ २७ ॥

मू.—आजानयांश्च जवनान्पृष्ठ्यान् रथ्यांश्च कर्कशान्।
पृष्ठेऽश्वान्वासयेद्राजा सविधे व्यूहकङ्कटान् ॥ २८ ॥

व्या.—आजानियान् पृष्ठ्यान् पृष्ठेन वहनोचितान्। रथ्यान् रथोद्वहनयोग्यान्। कर्कशान् धवलान्। सितः कर्कश (?) इत्यमरः। सविध समीपे। व्यूहकङ्कटान् सन्नद्धान्। "सन्नद्धो व्यूहकङ्कट" इत्यमरः ॥ २८ ॥

मू.—आश्विनं वप्रसहितं सालं काष्ठविनिर्मितम्।
बृहत्कूटं सपरिखं धनधान्यायुधान्वितम् ॥ २९ ॥

व्या.—आश्विनमश्वगतेनैकदिनसाध्यप्रान्तिकम्। "त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते।" इत्यमरः। वप्रेण सालाभित्तिमूलरचितमृत्कूटेन सहितं युक्तम्। शाकटीनिर्मितं काष्ठे रचितम्। बृहत्कूटम् बृहन्ति कूटानि सालभित्तिरचितवर्तुलमृद्दादिकूटानि यस्मिन्। "कूटं समूहे शिखरे वाणप्रान्तपादक" इति नानार्थकारः। सपरिखं परितः खन्यत इति परिखम्। सालप्रान्तगर्तविशेषः। तत्सहितम्। सालं समाश्रयेत्। आधारतया स्थापयेत् ॥ २९ ॥

मू.—सकाण्डपृष्ठं सजलं सतुषाङ्गाराशिल्पकम्।
समाश्रयेद्युध्यमानश्शत्रुभिर्नृपसत्तमः ॥ ३० ॥

व्या.—सकाण्डपृष्ठ शस्त्राजीविसहितम् । "शस्त्राजीवी काण्ड-पृष्ठः" इत्यमरः । तुषाङ्गारा मुर्मुराः । "मुर्मुरस्तु तुषाङ्गारः" इत्यमरः । शिल्पिनश्च तैस्सहितं पालयेदिति ॥ ३० ॥

मू.—बहूदयान्प्रात्ययिकान्कुल्यान्तर्वंशिकान्नृपः ।
प्राज्ञान्मूलप्रतीकारान्वैरनिर्यातनञ्चरेत् ॥ ३१ ॥

व्या.—बहूदयाननेकोपस्करवतः । प्रात्ययिकानाप्तान् । अन्तर्वं-शिकानन्तःपुराधिकारिणः । मूलप्रतीकारान् धनदानरक्षकान् । वैरनि-र्यातनं शत्रुषु द्वेषप्रत्यर्पणम् चरेत् ॥ ३१ ॥

मू.—मूलप्रतिग्रहं कृत्वा प्रत्यासारं प्रकल्प्य च ।
पौरश्रेणीस्स्वराष्ट्रञ्च पालयन् कृतप्राभृतः ॥ ३२ ॥

व्या.—मूलप्रतिग्रहं सैन्यपृष्ठसमूहं । "द्विधनुश्शतके देशे बृह-त्सैन्यस्य पृष्ठतः । मूलप्रतिग्रहः प्रोक्तो व्यूहश्शूरविनिर्मित" इति कामन्दकीये । प्रत्यासारो व्यूहपार्श्वस्थबलः । पौरश्रेणीरेकनायकस्स-जातीयनागप्रजाः । स्वराष्ट्रं स्वदेशमिलितपट्टणव्यूहम् । कृतप्राभृतः प्रतिगृहीतोपायनकः । "प्राभृतन्तु प्रवेशनं । उपायनमुपग्राह्यमुप-हारस्तथोपदे"त्यमरः ॥ ३२ ॥

मू.—सैनिकान् परिधिस्थांश्च स्थापयित्वा नृपोत्तमः ।
प्रस्थापयेन्मार्गकरान् पुरस्ताच्छिल्पिनो बहून् ॥ ३३ ॥

व्या.—सैनिकान् सेनारक्षणार्थं राजा कृतभृतिकान् । परिधिस्थान् सेनायाः परितः संरक्षणार्थं सञ्चरमाणान् ॥ ३३ ॥

मू.—कर्मान्तिकान् यष्टिधरान् खनकांस्तक्षकानपि ।
सूत्रिणो रोपकांश्चैव सेतुबन्धकरानपि ॥ ३४ ॥

व्या.—कर्मान्तिकान् कार्यसमापनसमर्थान् । तक्षकान् दार्वादित-क्षणसमर्थान् । सूत्रिणस्सूत्रधारिणः ॥ ३४ ॥

मू.—तथा भूमिप्रदेशज्ञान् व्याधान्वनविशारदान् ।
विषमस्थं रिपुबलं ये विदुस्तान् बहुश्रुतान् ॥ ३५ ॥

व्या॰—विषमस्थं निम्नप्रदेशप्रच्छन्नं । विदुर्वेत्तारः । बहुश्रुतान् श्रुतसकलवृत्तान्तान् ॥ ३५ ॥

मू॰—प्रेषयित्वा नयेत्सेनां गुप्तिकर्म विधाय च ।
परिहृत्य श्मशानानि देवतायतनानि च ॥ ३६ ॥

व्या॰—गुप्तिकर्म संरक्षणकृत्यम् ॥ ३६ ॥

मू॰—आश्रमांश्च महर्षीणां तीर्थान्यायतनानि च ।
नाधितिष्ठेत्तुषाङ्गारभस्मकेशकपालिकाः ॥ ३७ ॥

व्या॰—अधि आश्रित्य तिष्ठेत् । तासु सेनानिवेशो न कार्य इति भावः ॥ ३७ ॥

मू॰—मधुरानूषरे देशे शिवे पुण्ये जलावृते ।
निवेशं कारयेद्राजा सेनायास्तु स्ववृद्धये ॥ ३८ ॥

व्या॰—स्ववृद्धये स्वाभ्युदयाय ॥ ३८ ॥

मू॰—विद्रावयेच्छत्रुगुल्मांस्तथा चैकचराहितान् ।
परिक्रमेच्च सेनायां परितो योधसंवृतः ॥ ३९ ॥

व्या॰—शत्रुगुल्मान् शत्रुभिस्स्वनिरोधार्थं यूथशस्स्थापितभटान् । एकचराहितानेक एव गूढश्चरतीति तादृशरिपून् ॥ ३९ ॥

मू॰—दूष्याणि च नरेन्द्राणां स्वयमेव विचारयन् ।
शत्रूद्योगविघातार्थं परितश्चारयेद्बलम् ॥ ४० ॥
गुप्तकर्म समादिश्य चारानप्यनुविधाय च ।
शिबिराणि महार्हाणि स्वयोधानां पृथक् पृथक् ॥ ४१ ॥
प्रभूतजलकाष्ठानि दुराधर्षतराणि च ।
भक्ष्यभोज्योपपन्नानि धनधान्ययुतानि च ॥ ४२ ॥
कृत्वा सुशिल्पिनः प्राज्ञान् शतशो दत्तवेतनान् ।
सर्वोपकरणैर्युक्तान्वैद्यांश्च सुविशारदान् ॥ ४३ ॥

व्या॰—दूष्याण्युपगृहाणि । "दूष्याद्यं वस्त्रवेश्मनी" त्यमरः ॥ ४० ॥ ॥ ४०—४२ ॥

दत्तवेतनान्निर्यातितभृतिकान् । वैद्यान् चरकमौलिकचिकित्साकोविदान् । क्षतचिकित्सका रोगचिकित्सानिपुणा वा ॥ ४३ ॥

मू.—प्रदेयानि तु योधानां वस्त्राण्याभरणानि च ।
वित्तं बहु च संस्थाप्य निश्शङ्को योधयेदरीन् ॥ ४४ ॥

व्या.—प्रदेयानि पारितोषिकाणि । "दद्यात्प्रहृष्टो नियतं वर्वाणां राजप्रातिने" त्यादिना वक्ष्यमाणानि । निकटे स्वासन्नप्रदेशे । अरीन् योधयेत् स्वकीयैर्बलैरिति शेषः ॥ ४४ ॥

मू.—गतवाहनयोधानां वाहनानि प्रकल्पयेत् ।
विशस्त्राणाश्च शस्त्राणि दापयेद्युधि भूमिपः ॥ ४५ ॥

व्या.—गतवाहनयोधानां गतानि युद्धैर्हतानि मृतानि वा वाहनानि तै च ते योधाश्च तेषां प्रकल्पयेत् । दापयेत् विशस्त्राणां विगतायुधानां दापयेत् । आयुधागाराधिकृतैरिति शेषः ॥ ४५ ॥

मू.—पल्याणानि खलीनानि पल्ययाङ्कादिकानि च ।
प्रकीर्णकानि शीर्षण्यान्यथो कङ्कटकान् कुथाः ॥ ४६ ॥

व्या.—पल्याणानि हयपृष्ठे उपवेशार्थं क्लृप्तासनानि । "पल्याणं स्यात्पल्ययन" मित्यमरः । खलीनान्यश्वविवर्तनार्थं क्लृप्तमुखरज्जुविशेषाः । "खलिका तु खलीनोऽस्त्री" इत्यमरः । पल्ययाङ्कान्यश्वारोहार्थं क्लृप्त-पार्श्वद्वयविलम्बिसोपनानि । प्रकीर्णकानि चामराणि । "चामरन्तु प्रकीणक" मित्यमरः । शीर्षण्यानि शिरस्त्राणानि । "शीर्षण्यन्तु शिरस्त्रेऽथ" इत्यमरः । कङ्कटानुरश्छदान् । "उरश्छदः कङ्कटक" इत्यमरः । कुथाः परिस्तोमाः । परिस्तोमः कुथा द्वयोः । गजपृष्ठपिधानानि ॥ ४६ ॥

मू.—ज्याधनुर्वर्म शस्त्राणि चापानि यवसं बहु ।
महायन्त्राणि नाराचांस्तोमरांश्च परश्वधान् ॥ ४७ ॥

व्या.—ज्या मौर्वी । धनूंषि । वर्माणि कवचानि । शस्त्राणि खड्गादीनि । चापानि द्वैतस्तिकबाणप्रयोगसाधनत्रिवक्रधनूंषि । यवसं श्वेतदूर्वा । "यवसं तृणमर्जुनमि" त्यमरः । महायन्त्राणि शिलालोहगुलिकाक्षेपकनलिकारूपयन्त्राणि ॥ ४७ ॥

मू.—रज्जून् शङ्कूञ्छङ्कुरोपान् लोहपादनिबन्धनान् ।

धात्राणि च कुठारांश्च वाश्यांश्च छुरिका अपि ॥ ४८ ॥

व्या.—रज्जून् पटग्रहगजतुरगादिबन्धनार्थान् । शङ्कुरोपाञ्छङ्कुस्थापनसमर्थातिर्यग्दारुलगुडान् । लोहपादनिबन्धनान् लोहनिर्मिततुरगवृषभपादमृदुत्वपरिहारकलोहचन्द्रकान् । "अश्वादिपादरक्षायां लोहचन्द्रक इति" इति मेदिनी । दात्राणि वाश्यान् दारुतक्षणसाधनानि ॥ ४८ ॥

मू.—चक्राणि लोहपट्टाश्च क्रकचांश्चर्मभस्त्रकान् ।

पटकानि खनित्राणि सूचीश्च ग्रथनोचिताः ॥ ४९ ॥

व्या.—लोहपट्टो रथचक्रनेमिबन्धनः । चर्मभस्त्रिकाः जलाहरणयोग्यनरवृषपृष्ठहार्यचर्मकोशान् ॥ ४९ ॥

मू.—पृष्ठ्यान् वृषानश्वतरीनुष्ट्रान्वै दूरगामिनः ।

गजानाश्व हयानाश्व नराणामगदानि च ॥ ५० ॥

व्या.—पृष्ठ्यान् पृष्ठेन भारवहनसमर्थान् । अश्वतरीन् गर्दभ्यां तुरगादुत्पन्नान् । दूरगामिनः । उष्ट्रान् वार्तिककरभान् । अगदान्यौषधानि ॥ ५० ॥

मू.—विविधानि च वाद्यानि तथा कैरातकं मधु ।

शाल्मलीतूलिकाश्चैवाप्यश्मसाराश्मसंयुतान् ॥ ५१ ॥

व्या.—कैरातकं युद्धोत्साहजनकं मद्यम् । "युद्धोत्साहकरं मद्यं यत्तु कैरातकं हि तत् ।" रणे भाविनि घोरे तु सेव्यं तत् क्षत्रियैर्द्रुतम् ।" इति नीतिविवेके । अश्मसारो लोहविशेषः । अश्माग्न्युपलः तत्संयुतां शाल्मलीतूलिकामित्येतत्त्रयमग्न्युत्पादकमिति लोकप्रसिद्धम् ॥ ५१ ॥

मू.—वराक्रीश्चैव तरुजाः कटाहाँल्लोहताम्रकान् ।

आरकूटांश्च टङ्कांश्च शाणांश्च पृथनानपि ॥ ५२ ॥

व्या.—तरुजाः वार्क्षाः । वराकीरसूलपट्टीः । धान्यादिपूरणयोग्याः ; आरकूटान् पित्तलत्यपरनामकरीतीः । "रीतिः स्त्रियामारकूटः" इत्यमरः । टङ्कान् पाषाणभेदनान् । शाणान् कर्षान् । पृथनान् गुञ्जादितोलनकरान् ॥ ५२ ॥

मू.—आरा उपानहश्चैवाप्यूरुत्राणि कशास्तथा ।
विश्वकद्रूंश्च वेणूंश्च वागुरा बडिशान्यपि ॥ ५३ ॥

व्या.—आराश्चर्मभेदकशस्त्राणि । "आरा चर्मप्रभेदिके"त्यमरः । ऊरुत्राणि पादमारभ्योरुपर्यन्ताच्छादकानि । कशाः अश्वादिताडनार्थ-प्रतोदान् । "अश्वादेस्ताडनी कशे"त्यमरः । विश्वकद्रून्मृगयाकुशलशुन-कान् । "विश्वकद्रुर्मृगयाकुशलः" इत्यमरः । वागुरा मृगबन्धनयोग्य-जालाः । "वागुरा मृगबन्धिनी"त्यमरः । बडिशानि मत्स्यबन्धनयोग्य-वक्रशल्यानि । "बडिशं मत्स्यबन्धन"मित्यमरः ॥ ५३ ॥

मू.—पतद्ग्राहान् गन्धतैलं पीतिकादीनि यानि च ।
प्रस्थानिकानि सेनायास्तानि सुष्ठु प्रकल्पयेत् ॥ ५४ ॥

व्या.—पतद्ग्राहांस्ताम्बूलश्लेष्मादि गृह्णाति स्वपृथुकण्ठभोगेनेति पतद्ग्राहः । म्लेच्छभाषायां पीकुदानीति प्रसिद्धः । "पतद्ग्राहः पतद्ग्रह" इत्यमरः । प्रास्थानिकानि प्रस्थानयोग्यानि तानि पूर्वोक्त-वस्तूनि । सुष्ठु प्रकल्पयेत् सम्यक् सम्पादयेत् ॥ ५४ ॥

मू.—योधेषु रथिकान् कुर्यादश्वपृष्ठविशारदान् ।
अश्वारूढांस्तथा कुर्याद्रथेषु परिनिष्ठितान् ॥ ५५ ॥

व्या.—योधेषु चतुरङ्गबलाविद्यमानभटेषु मध्ये रथिकान् । अश्व-पृष्ठविशारदान् तुरङ्गयुद्धकुशलान् । कुर्यादिति सर्वत्रान्वयः ॥ ५५ ॥

मू.—उभौ तौ नृपतिः कुर्याद्गजपृष्ठसुयोधिनौ ।
तान्हि कुर्यात्पदातीन्वै पदातीनपि तादृशान् ॥ ५६ ॥

व्या.—तावुभौ रथिकाश्वसादिनौ । तान् रथिकगजारूढतुरगारूढान् । त्रीन्पादातवल्गितनिपुणान् कुर्यात् । तादृशान् रथिकगजारूढतुरगाधिष्ठित-तुल्यान् ॥ ५६ ॥

मू.—सारथ्ये च गजस्कन्धे चक्ररक्षाविधौ तथा ।
अन्येषु वा साहसेषु तान् कुर्यान्निपुणान्नृपः ॥ ५७ ॥

व्या.—तांश्चतुरङ्गयोधान् ॥ ५७ ॥

मू.—द्वात्रिंशत्करणानि स्युर्युद्धे यानीह नीतितः ।
चतुरङ्गबलं सर्वं तेषु कुर्यात्सुनिष्ठितम् ॥ ५८ ॥

व्या.—किं बहुना ? पूर्वोक्तद्वात्रिंशदायुधविद्यानिपुणान्कुर्यादित्याह-द्वात्रिंशदित्यादिना ॥ ५८ ॥

मू.—प्रयाणपूर्वयायित्वं वनदुर्गप्रवेशनम् ।
अकृतानाञ्च मार्गाणां कृतानाञ्च प्रवर्तनम् ॥ ५९ ॥

बिभीषिकाविघातश्च तथा प्राकारभञ्जनम् ।
कोशनीनिर्भयत्राणं भिन्नसन्धानमेव च ॥ ६० ॥

शत्रुपत्त्यश्वरोधश्च दुर्गे भारोद्वहस्तथा ।
वृक्षावभञ्जनश्चैव हस्तिकर्म प्रचक्षते ॥ ६१ ॥

व्या.—चतुरङ्गबलकार्याण्याह-प्रयाणपूर्वयायित्वमित्यादिना । प्रयाणे यात्रायां पूर्वयायित्वम् प्रथमगन्तृत्वम् । वनात्मकं यद्दुर्गं दुःखेन गन्तुं शक्यं तत्प्रवेशनम् ॥ ५९ ॥

बिभीषिकाणां कृत्रिमदारुमृन्निर्मितयन्त्राणाम् । द्रव्यप्रापणम् । भिन्नसन्धानं युद्धकाले परकृतच्छिद्रपूरणम् ॥ ६० ॥

शत्रूणां पत्तयश्च अश्वाश्च तेषां रोधो निरोधः । भारोद्वहो भारनिर्हरणम् ॥ ६१ ॥

मू.—द्वितीयसैन्ययायित्वं गजसंरक्षणं तथा ।
भिन्नसन्धानकारित्वं दूरे शत्रुनिवारणम् ॥ ६२ ॥

शत्रूणामभिरोधश्च व्यूहद्वारे व्यवस्थितिः ।
महाघोषविधिश्चेति रथकर्म प्रचक्षते ॥ ६३ ॥

व्या.—रथकर्माह—द्वितीयेति । द्वितीयसैन्यं प्रथमगतस्य स्कन्धावारार्थङ्गतसैन्यं । तत्र गमनं ॥ ६२ ॥

शत्रूणामभिरोधोऽभिमुखनिरोधः । व्यूहद्वारेषु शत्रुसैन्यप्रवेशाविवरेषु । महाघोषविधिः रिपुहृदयस्फोटकशब्दकरणम् ॥ ६३ ॥

मू.—वनदिङ्मार्गविज्ञानं वीरुधासाररक्षणम् ।
प्रसारकरणश्चापि हेषिताच्छत्रुभीषणम् ॥ ६४ ॥

अनुयानापसरणे शीघ्रकार्योपपादनम् ।
लुण्ठनं शत्रुसैन्यानामश्वकर्म प्रचक्षते ॥ ६५ ॥

व्या.—अश्वकार्यमाह—वने दिशां मार्गाणाञ्च विज्ञानम् । वीरुधस्य धान्यादिप्राप्तेः । आसारस्य सुहृद्बलस्य । रक्षणम् स्वसैन्यप्रवेशकरणम् । प्रसारस्य तृणकाष्ठादिप्रवेशस्य करणं प्रापणम् । "धान्यादेर्वीरुधः प्राप्तिः आसारस्तु सुहृद्बलम् । प्रसारस्तृणकाष्ठादेः प्रवेश इति कथ्यते।" इति वैजयन्ती। हेषितात्स्वध्वनेः । शत्रुभीषणम् शत्रुभयसंपादनम् ॥ ६४ ॥

व्या.—अनुयानमनुसृत्य यानम् । अपसरणं कार्यार्थं निर्गमः । शीघ्रकार्याणां शत्रुकृतकपटादीनाम् । उपपादनं स्वराज्ञे निवेदनम् ॥ ६५ ॥

मू.—शोधनं कूपतीर्थानां मार्गाणां शिबिरस्य च ।
स्कन्धावारस्य करणं विष्टिकर्मप्रसाधनम् ॥ ६६ ॥

कोशागारायुधागारधान्यागारादिरक्षणम् ।
व्यूहप्राकारकरणं पत्तिकर्म प्रचक्षते ॥ ६७ ॥

व्या.—शिबिरस्थाननिवेशस्य स्कन्धावारस्य प्रधानबलरक्षकबलस्य-रक्षणस्य । विष्टयो भृतिं विना कर्मकराः । तेषां कर्मणः प्रसाधनं करणम् ॥ ६६ ॥

व्या.- कोशो धनम् । व्यूहस्य प्राकारकरणम् प्राकाराकारेणावस्थितिः ॥ ६७ ॥

मू—अवृक्षस्थूलपाषाणगुल्मवल्मीककण्टका ।
सापसारा पदातीनां भूर्नातिविषमा मता ॥ ६८ ॥

अपङ्का शङ्कुरहिता तथा पाषाणवर्जिता ।
खुराघातक्षमामिश्रा समा भूर्वाजिनां मता ॥ ६९ ॥

व्या.—अथ चतुरङ्गनिवेशभूमिमाह—अवृक्षेत्यादिना । तत्र प्रत्युपवेशोचितां भूमिमाह—अवृक्षेत्यादिना । सापसारा पादसञ्चारयोग्यप्रदेशसहिता । "पादसञ्चारयोग्यो यस्त्वपसारः प्रकीर्तितः" इति मेदिनी ॥ ६८ ॥

व्या.—अभिन्ना अस्फुटिता । वाजिनामश्वानां । मतोपवेशनयोग्यत्वेन सम्मता ॥ ६९ ॥

मू.—अकेदारा कृतश्वभ्रा वृक्षगुल्मविवर्जिता ।
खुरचक्रसहा सौम्या रथभूस्सम्प्रकीर्तिता ॥ ७० ॥

व्या.—खुरचक्रयोराघातसहनवती ॥ ७० ॥

मू.—मर्दनीयतरुश्रेष्टव्रततिः पङ्कवर्जिता ।
निर्दरा गम्यशैला च विषमा गजमेदिनी ॥ ७१ ॥

व्या.—मर्दनीयाः शुण्डापचयनयोग्या ये तरवो वृक्षाः तेषां श्रेष्ठा निबिडा व्रततिस्समूहो यस्याः सा । निर्दरा गुहरहिता ॥ ७१ ॥

मू.—सर्वसेनाधिपः कार्यः कुलपुत्रो जितेन्द्रियः ।
दृष्टापदानो दक्षश्च रूपवान्राजवल्लभः ॥ ७२ ॥

व्या.—दृष्टापदानः परीक्षितसाहसचरित्रः । "अपदानं कर्मवृत्तमि"त्यमरः । राजवल्लभो नृपे भक्तिमान् ॥ ७२ ॥

मू.—लालाटिकश्चेङ्गितज्ञः सेनानयविशारदः ।
धृष्टस्सान्त्वयिता चैव स्वयोधानां रणाजिरे ॥ ७३ ॥

व्या.—लालाटिकः प्रभोर्भावदर्शी । इङ्गितज्ञः पराभिप्रायवित् । "पराभिप्राय इङ्गितमि"त्यमरः । सेनाया नयः शिक्षणं तत्र विशारदः निपुणः । धृष्टो धैर्यवान् । रणाजिरे युद्धरङ्गे । स्वयोधानां सान्त्वयिता समाधाता ॥ ७३ ॥

मू.—अक्षौहिणीनां पतयः पृथक्कार्यास्तथाविधाः ।
सेनापतिवशे तेऽपि तिष्ठेयुस्तेन पालिताः ॥ ७४ ॥

व्या.—अक्षौहिणीनां तत्सङ्ख्याकसेनानां । पृथक् सर्वसेनाधिपतिभिन्नाः । तथाविधाः पूर्वोक्तसर्वसेनाधिपतिगुणतुल्यगुणकाः । तेऽप्यक्षौहिणीपतयोऽपि ॥ ७४ ॥

मू·—पत्तेस्सेनामुखस्यापि गुल्मस्य च गणस्य च ।
वाहिन्याः पृतनायाश्च चम्वाश्चाप्यधिपाः पृथक् ॥ ७५ ॥

अनीकिन्याश्च कार्या वै योधशिक्षासु निष्ठिताः ।
द्वयोस्त्रयाणाम्पतयः कार्याः कार्यानुसारतः ॥ ७६ ॥

व्या·—द्वयोः पत्तिद्वयस्य सेनामुखस्येत्यादिक्रमेण । त्रयाणां पत्तीनां सेनामुखस्येत्यादिक्रमेण । कार्यानुसारतः पत्तिद्वयपत्तित्रयादि-साध्यकार्यवशात् ॥ ७५—७६ ॥

मू·—दिवसे दिवसे संज्ञाः पृथक्कार्यास्स्वके बले ।
ता जानीयुस्सैन्यपाला न भटा नेतरे जनाः ॥ ७७ ॥

व्या·—संकेतानि ताः संज्ञाः । भटानां दत्ता भिन्नाः । इतरे जना उदासीना न जानीयुरिति योजना ॥ ७७ ॥

मू·—स्वाज्ञासञ्चरणार्थाय सञ्चरेयुस्स्वचिह्निनाः ।
शत्रूणामुपघातार्थं गुप्तिकर्म प्रचक्षते ॥ ७८ ॥

व्या·—स्वाज्ञासञ्चरणार्थाय राजकार्यचालनाय स्वचिह्निना राजमुद्रो-पलक्षिताः गुप्तिकर्मेत्थं गोपनकरणम् । शत्रूणामुपघातार्थम् शत्रुकृत-कपटप्रतिक्रियार्थामिति प्रचक्षते । तथा च निशि संकेतविरुद्धाभिधायिनः शिक्षणीया इति भावः ॥ ७८ ॥

मू·—यादृक् सैन्याधिपत्ये तु पूर्वं योऽधिकृतो भवेत् ।
स ज्येष्ठभावे नियतस्तत्पाश्चात्यास्तु तद्वशे ॥ ७९ ॥

व्या·—यादृक्सैन्याधिपत्ये यत्सांज्ञिकसेनापतित्वे स पूर्वाधिपः । ज्येष्ठभावे ज्येष्ठत्वे नियतः क्लृप्तः । तत्पाश्चात्यास्तदनन्तराधिपतयः । तद्वशे तत्पूर्वाधिपत्याज्ञायां वसेयुरिति शेषः । अयं भावः एकः पत्त्याख्य-सैन्याधिपः तस्य गणाख्यसैन्याधिपत्यं दत्त्वा चानन्तरं पत्तेराधिपः क्रियते । यस्त्वपूर्वपत्त्यधिपाज्ञां नोल्लङ्घेत । एवं गुल्माद्यधिपतिषु तरतमभावाश्चोह-नीयाः ॥ ७९ ॥

मू·—पश्चाद्यङ्गपतीनष्टावक्षोहिण्यधिपानुगान् ।
कृत्वा ज्येष्ठानुसारेण नियम्यास्सर्वसैनिकाः ॥ ८० ॥

व्या·—नियम्याश्शिक्षणीयाः ॥ ८० ॥

मू·—राज्ञा नियमितांस्त्यक्त्वा तथासंज्ञोत्तरप्रदान् ।
हन्यान्निशिचरान्सैन्ये नृपाज्ञापरिपन्थिनः ॥ ८१ ॥

व्या·—नियमितान् कृतमुद्रादिचिह्नान् । त्यक्त्वा विना । संज्ञोत्तरप्रदानानभिज्ञान् असंज्ञोत्तरप्रदानिति भेदः । राज्ञा गुल्मस्थापनाधिपे कर्णेजपविरुद्धभाषिणः । शत्रव इति ज्ञेय इति भावः ॥ ८१ ॥

मू·—अधिपाः प्रतिसेनायास्त्रयः कार्यास्सुशिक्षिताः ।
उत्तमाधममध्यस्था ज्येष्ठाज्ञावशवर्तिनः ॥ ८२ ॥

व्या·—ज्येष्ठः उत्तमः ॥ ८२ ॥

मू·—दिवसे दिवसे सेनां परिवृत्य प्रचोदयेत् ।
एकत्र सुस्थितं सैन्यं शङ्कां स्वस्यापि साधयेत् ॥ ८३ ॥

व्या·—परिवृत्य व्यत्ययं कृत्वा । स्थानविनिमयं कृत्वेति यावत् । स्वस्यापि नृतिदायकराज्ञोऽपि । शङ्कामुपचापरूपमयं साधयेत् कुर्यात् ॥ ८३ ॥

मू·—यस्त्वमात्योऽनुकूलस्स्याद्राजकार्यधुरन्धरः ।
सैन्यपालस्य तस्याज्ञां स्वयं राजा समाश्रयेत् ॥ ८४ ॥

व्या·—तस्यापत्सहायभूतामात्यस्य स्वयं राजापि समाश्रयेच्छृणुयात् । ॥ ८४ ॥

मू·—समुत्पिञ्जे स्वसैन्ये च संशप्तैर्योधयेदरीन् ।
वीराशंसनके तिष्ठद्विजिगीषुर्नृपस्स्वयम् ॥ ८५ ॥

व्या·—स्वसैन्ये समुत्पिञ्जे भृशमाकुले सति "समुत्पिञ्जपिञ्जलौ भृशमाकुले" इत्यमरः । संशप्तकैः शपथपूर्वकं युद्धादनिवर्तिभिः । "संशप्तकास्तु समयात्संग्रामादनिवर्तिनः" इत्यमरः । वीराशंसनके खण्डितगजाश्वादिभिरतिभयङ्करयुद्धभूस्थाने । "सा वीराशंसनं युद्धभूमिर्यातिभयप्रदा" इत्यमरः । स्वयं नृपो विजिगीषुस्सन् । तिष्ठेत्पूर्वोक्तद्वादशराजमण्डलसहित इत्यर्थः ॥ ८५ ॥

मू.—कान्दिशीके स्वसैन्ये तु मुण्डानीके वसेत्स्वयम् ।
कृतलोहाभिसारस्सन् पश्चाद्गत्वा रिपून् जयेत् ॥ ८६ ॥

व्या.—कान्दिशीके दैवकृताद्भयात्पलायमाने सति । "कान्दिशीको भयाद्रुतः" इत्यमरः । मुण्डानीके वक्ष्यमाणलक्षणकव्यूहे । कृतः लोहाभिसारोऽस्त्रधारणसमये कृतारार्तिकस्सन् । "लोहाभिसारोऽस्त्रभृतां राज्ञां नीराजनाविधिरि" त्यमरः ॥ ८६ ॥

मू.—गव्यूतिमात्रे यो व्यूहो बृहत्सैन्यस्य निर्मितः ।
अच्छत्रचामरैश्शूरैर्मुण्डानीकं स चोच्यते ॥ ८७ ॥

व्या.—बृहत्सैन्यस्य स्वप्रधानबलस्य गव्यूतिमात्रे गवोः क्रोशयोः मिश्रणं गव्यूतिमात्रम् । गोशब्दः क्रोशवाचीति दण्डी । यु मिश्रणे । तस्मिंस्तद्व्यवधानकदेशे । "चतुष्काधिकाविंशत्याचाङ्गुलैर्हस्तकल्पना । सहस्रैरष्टभिः ख्यातं हस्तकैः क्रोशमानकमिति" । अच्छत्रचामरैः । छत्रचामरादिबहिःप्रकाशोपकरणरहितैः शूरैर्निर्मितः मुण्डानीकसंज्ञित इत्युच्यते ॥ ८७ ॥

मू.—प्रत्यग्रे कर्माणि कृते श्लाघमानः कृतादरः ।
योधेभ्यः पूर्णपात्रं हि दद्याद्राजा विशेषतः ॥ ८८ ॥

व्या.—चारसंग्रहणार्थं बहुमानदानं वक्तुं प्रथमतः तत्कारणीभूतकृत्यमाह—प्रत्यग्रेति श्लोकेन । प्रत्यग्रे नूतने कर्माणि, साहसे । श्लाघमानः वीर्यश्लाघां कुर्वन् । कृतः आदारः योधेषु विश्वासो येन तथाभूतः सन् । विशेषतो भृत्याधिकं । पूर्णपात्रं सन्तोषश्रवणानन्तरदीयमानबहुमानम् । "स्वप्रियन्तु भृशं (कृत्वा) श्रुत्वा दृष्ट्वा वा दीयते च यत् । पारितोषिकरिकृथं तत् पूर्णपात्रं वदन्ति ही" ति निबन्धनकारः ॥ ८८ ॥

व्या.—कीदृशकार्ये कियद्धनाधिकं देयमित्यत्राह—दद्यादिति ।

मू.—दद्यात्प्रहृष्टो ।ियुतं वर्णानां राजघातिने ।
तदर्धं तत्सुतवधे सेनापतिवधे तथा ॥ ८९ ॥

व्या.—राजघातिने शत्रुराजशिरश्छेत्रे । स्वयोधाय प्रहृष्टः सन् वर्णानामष्टाविंशतिगुञ्जापरिमितसुवर्णमुद्रिकाणाम् । "गुञ्जाष्टविंशतिमितमहारजतमुद्रिका । वर्वे स्यान्निष्कमित्यन्ये तामेवाहुस्सुवर्णकमि" ति मेदिनी । नियुतं लक्षामिति कामन्दकटीकायां व्याख्यातम् । दद्यात्पारितोषिकविधिनेत्यादि । तत्सुतवधे राजपुत्रवधे कृते तदर्धं पञ्चाशत्सहस्राणीत्यर्थः । सेनापतिरत्र सर्वसेनानायकः ॥ ८९ ॥

मू.—अक्षौहिणीपतिवधे तदर्धं परिचक्षते ।
मन्त्र्यमात्यवधे चैव तदर्धं तु प्रदापयेत् ॥ ९० ॥

व्या.—अक्षौहिणीपतिवधे एकाक्षौहिणीनायकवधे पञ्चविंशत्सहस्राणि । बुद्धिसहायो मन्त्री । आपत्सहायोऽमात्यः । तदर्धम्पञ्चशताधिकद्वादशसहस्राणीत्यर्थः ॥ ९० ॥

मू.—अनीकिनी चमूश्चैव पृतना वाहिनीगणः ।
गुल्मं सेनामुखं पत्तिरेतेषां पतिघातिने ॥ ९१ ॥

व्या.—अनीकिन्यादीन्यक्षौहिण्यंशानि । एतेषामुक्ताङ्गानां पतिघातिने नायकहन्त्रे ॥ ९१ ॥

मू.—क्रमादर्धांशह्रासेन तत्तदर्धानि दापयेत् ।
वेतनादधिकश्चैतत्प्राप्य कुर्युश्च साहसम् ॥ ९२ ॥

व्या.—क्रमाज्ज्येष्ठन्यूनभावक्रमात् । अर्धांशह्रासेनार्धांशसङ्कोचकरणेन । तत्तदर्धानि पूर्वपूर्वनायकहन्तृदीयमानादर्धानि । दापयेत् कोशाधिकारिणेति शेषः । एतत्प्रतिदानस्य फलमाह-वेतनादधिकमिति ॥ ९२ ॥

मू.—अक्षौहिण्याः पतिं हत्वा द्वितीयं वा तृतीयकम् ।
चम्वोरधिपतिश्चैव पृतनानां पतिं तथा ॥ ९३ ॥

व्या.—द्वितीयं पतिं तृतीयं वा पतिं । तथा चोत्तममध्यमादिषु । उत्तमं त्यक्त्वेतरौ हत्वेत्यर्थः । चम्वोश्चमूद्वयस्य पृतनां पृतनानामकसेनानां पतिं हत्वा ॥ ९३ ॥

मू.—अनीकिनी हृता यावत्तावत्प्राप्नोति राजतः ।
इत्थमग्रेऽपि योक्तव्यं सन्मानमधिपापहे ॥ ९४ ॥

व्या.—अनीकिनिनामकसैन्यपालहन्ता यावत्प्राप्नोति वर्षान् लभते तावदेव पूर्वोक्तसैन्यपालहन्ता इत्यर्थः। अग्रेऽप्यनीकिन्याः द्वितीयं तृतीयं पृतनयोरधिपं वाहिनीनामधिपं हत्वा चम्वाख्याधिपहन्ता यावत्पञ्चविंशत्युत्तर शताधिकत्रिसहस्रसङ्ख्याकवर्षान्प्राप्नोति । एवं चम्वोर्द्वितीयं तृतीयं वाहिन्योः पतिं गणाख्यसेनानां पतिं हत्वा। पृतनाधिपहेति यावत्। एवमर्धाधिकद्विषष्ट्युत्तरपञ्चशताधिकसहस्रवर्षान्प्राप्नोतीत्यादिरीत्या योज्यम्। वाहिनीपतिहन्तुस्सपादैकाशीत्यधिकसप्तशतवर्षाः । गणादिसेनापतिहन्तृष्ववर्षाशन्यूनाः ॥ ९४ ॥

मू.—पलायितं सायुधन्तु धृत्वा स्वभटदायिने ।
वर्षाणां पञ्च वै दद्यात्तस्मै सत्कृत्य भूमिपः ॥ ९५ ॥

व्या.—स्वभटदायिने स्वशूरस्य स्वाधीनकर्त्रे ॥ ९५ ॥

मू.—पलायितं स्वभृतिकं विशस्त्रं देहलोभिनम् ।
धृत्वा निवेदिने दद्याद्वर्षाणाञ्च त्रिकं नृपः ॥ ९६ ॥

व्या.—स्वभृतिकं स्वस्माद्भृतिर्वेतनं यस्य सः स्वभृतिकः तम्। विशस्त्रं शस्त्ररहितम्। देहलोभिनं युद्धे छेदभेदादिरूपोपद्रवध्यायिनमित्यर्थः। निवेदिने वशीकरणसमर्थाय। त्रिकं त्रीन् वर्षानित्यर्थः ॥ ९६ ॥

मू.—गजश्च गजसादिश्च महारथिकमस्तकम् ।
छित्वा निवेदयेद्राज्ञो द्विसाहस्रं स चार्हति ॥ ९७ ॥

व्या.—गजसादिनं गजपृष्ठमधिरुह्य शत्रुयोधनसमर्थशूरश्चेत्यर्थः। महारथिकः—

एकादशसहस्राणि योधयेद्यस्तु धन्विनाम् ।
स वै महारथः प्रोक्तस्ततश्चातिरथस्स्मृतः ॥

इत्युक्तलक्षणः। तस्य मस्तकं शिरः। निवेदयेद्रणादाहृत्य दर्शयेत् ॥ ९७ ॥

मू.—हयारूढवरं हत्वा पादाताधिपतिं तथा ।
वर्षाणाञ्च सहस्रस्य योग्यो भवति राजतः ॥ ९८ ॥

व्या.—हयारूढानां वरो नायकः तम्। योग्यः पात्रम्। राजतो राज्ञस्सकाशात् ॥ ९८ ॥

मू.—शत्रुसैन्यात्कुञ्जरं वा रथं वा यस्समाहरेत्।
पञ्चाशद्द्विगुणं सम्मानं स प्राप्नोत्विह राजतः ॥ ९९ ॥

व्या.—कुञ्जररथावनधिष्ठितपुरुषौ। इह युद्धे। प्राप्नोत्विति लोकशिक्षणे ॥ ९९ ॥

मू.—प्रतिप्रयाणं भृत्यानां भक्तं देयं स्थितौ न हि।
मार्गायासं विदित्वैषां वेतनादधिकं त्विदम् ॥ १०० ॥

व्या.—प्रतिप्रयाणं प्रयाणे प्रयाणे। भक्तं व्रीहितण्डुलादिधान्यम्। स्थितौ निवेशनसमये। देयमित्यर्थेन भक्तमित्यनुकर्षः। भृतिस्तु देयैवेत्यर्थः। कुतस्तेषां वेतनादधिकं धान्यादिदानं कर्तव्यमित्याशङ्क्याह—मार्गायासमिति। तेषां शूराणां। न त्वितरेषामित्यर्थः। इतरेषां मार्गायासवत्वेऽपि युद्धादिरूपदुर्घटकार्याभावाद्वेतनेनैव तेषां निर्वाहः। शूराणान्तु पथ्यशनमपि देयमिति भावः ॥ १०० ॥

मू.—अन्येषु वा साहसेषु वेतनादधिकं नृपः।
लोकसंग्रहणार्थञ्च दद्याद्वै पारितोषिकम् ॥ १०१ ॥

व्या.—अन्येषु साहसेषु शत्रुसैन्ये स्थित्वा तद्वार्ता स्वराज्ञे निवेदनम्, युद्धे प्रथममभिमुखशत्रुगमनं, मार्गे वृक्षवापीस्थितशत्रुकर्तनमित्यादिरूपेषु। लोकसंग्रहार्थं शूरजनमेलनार्थम्। पारितोषिकं स्वसन्तोषसूचकं द्रव्यवस्त्रभूषणादिरूपम् ॥ १०१ ॥

मू.—भटेभ्यश्चैव वस्त्राणि रजकानाञ्च वेतनम्।
तद्वेतनेनैव कल्प्यान्यौषधानि च रोगिणाम् ॥ १०२ ॥

व्या.—रजकानां शूरवस्त्रक्षालकभृत्यानां। रजक इति श्मश्रुवर्धकादिवाहीकर्योरुपलक्षणम्। भटेभ्यो गृहीत्वेति शेषः। तद्वेतनेनैव भटभृत्यैव तेषां वेतनं कल्प्यमिति योजना। रोगिणां रोगमनुभूयमानानाम्। औषधान्यगदानि कल्प्यानीत्यनुकर्षः ॥ १०२ ॥

मू.—पराराष्ट्रार्जितं द्रव्यमर्धं राजा विभज्य तु ।
योधेभ्योऽर्धं प्रदेयं स्यादर्धं च स्वयमाहरेत् ॥ १०३ ॥

व्या.—पराराष्ट्रार्जितं शत्रुराज्याच्छूरैराहृतं द्रव्यं तदुपलक्षितवस्त्र-भूषणादिरूपमर्धं यथा तथा विभज्य योधेभ्य आहृतेभ्यः तत्सहायेभ्य-श्चार्धं प्रदेयम् । उर्वरितं स्वयमाहरेत् ॥ १०३ ॥

मू.—हयं वा शकटीं वापि हरेत्सोपस्कृतां भटः ।
तदर्धं तुर्यमंशन्तु स लभेद्राजसत्कृतः ॥ १०४ ॥

व्या.—सोपस्कृतामुपकरणसहितां । इदं हयस्यापि लिङ्गव्यत्ययेन । तदर्धस्य तन्मूल्यस्य "मूल्ये पूजाविधावर्घ" इत्यमरः । तुर्यं चतुर्थमंशं भागम् स आहर्ता ॥ १०४ ॥

मू.—शिथिलानि च शस्त्राणि लुण्ठितं शत्रुभिर्युधि ।
स्वयोधानां नृपो दद्याद्वेतनं परिहाप्य च ॥ १०५ ॥

व्या.—शिथिलानि जीर्णानि । शस्त्राणि शस्यन्ते हन्यन्ते यैरिति शस्त्राणि खड्गादीनि । लुण्ठितं बलात्परिमुषितं । वेतनं परिहाप्य भृतिं विना । भृतावन्तर्भावमकृत्वा । राज्ञा स्वहस्तादेतानि देयानीति भावः ॥ १०५ ॥

मू.—युद्धे स्वार्थं मृता ये च शत्रुभिस्तत्स्वबन्धुषु ।
सेवया जीरिता ये च देयं तेषान्तु जीवनम् ॥ १०६ ॥

व्या.—स्वार्थं राजकार्यार्थं । तेषां मृतानाम् । स्वबन्धुषु पुत्रपत्नी-मातापितृषु । ये च सेवया राजसेवया । जीरिता जरां प्राप्ताः ॥ १०६ ॥

मू.—मृतानां जीवताञ्चापि पूर्वं सेवापरात्मनां ।
तदीयानान्तु तेषां वा पूर्वभर्मार्धजीवनम् ॥ १०७ ॥

व्या.—मृतानां मृतसम्बन्धिनां पूर्वसेवापरात्मनां जीवतां वृद्धानां । पूर्वभर्मार्धजीवनम् । सेवाकालप्राप्तवेतनार्धरूपम् जीवनं । भृतयो भर्म वेतनमित्यमरः ॥ १०७ ॥

व्या॰—अवृद्धानामपि राजकार्यार्थं सक्षतानां अर्धवेतनं—देयमित्याह सङ्ग्रामेति ।

मू॰—सङ्ग्रामाभिमुखाः क्रान्ता युवानो न मृता भटाः ।
राजसेवास्वशक्ता ये तेषां पूर्वार्धजीवनम् ॥ १०८ ॥
शत्रूणामुपघातार्थं तस्य मर्माणि योऽर्पयेत् ।
स्वस्मै तस्यापि कर्मण्या द्विगुणा परिकीर्तिता ॥ १०९ ॥

व्या॰—उपघातार्थमुपद्रवार्थं । तस्य शत्रोः । जातावेकवचनम् । मर्माणि विवराणि स्वस्मै राज्ञे योऽर्पयेत् ज्ञापयेत् । तस्यापि आख्यातुरपि कर्मण्या कर्मसाध्या भृतिः । कीर्तिता । नीतिशास्त्राभिज्ञैरिति शेषः ॥ १०९ ॥

मू॰—शत्रुसेनाविभेत्तारं दुर्गारोहणतत्परम् ।
स्वराज्यवृद्धिकर्तारं योजयेद्द्राविणोत्करैः ॥ ११० ॥

व्या॰—शत्रुसैन्यानां रिपुसैन्यानां विभेत्तारं विशेषतो विद्रावकम् । मारकं वा । दुर्गारोहणतत्परं शत्रुदुर्गसालग्रहणार्थं तदारोहणचतुरम् । आसक्तमिति यावत् । स्वराज्यवृद्धिकर्तारं । स्वराष्ट्रीयेभ्योऽधिकतरग्रहणश्च । भरणराष्ट्रदानादिभिस्सत्कुर्यादिति फलितार्थः ॥ ११० ॥

मू॰—इत्थं विधाभिस्तु भटान् नियोज्य
राजा कृतार्थस्तु रिपून्निहत्य ।
संप्राप्य कीर्तिं महतीं श्रियश्च
महीयते राजवराभिवन्द्यः ॥ १११ ॥

॥ इति वैशम्पायननीतिप्रकाशिकायां सेनानयनकथनं नाम
षष्ठः सर्गः ॥

व्या॰—एवं प्रीतिदाने कृते राज्ञां फलमाह । इत्थं विधाभिरेतादृशप्रकाराभिः "विधा विधौ प्रकारे" च"त्यमरः । रिपून्निहत्य कृतार्थस्सन् कृतप्रयोजनो भूत्वा । राजवराभिवन्द्यः मूर्धाभिषिक्तैःकृताभिवादनः । महीयते सर्वोत्कर्षेण तिष्ठतीत्यर्थः ॥ १११ ॥

॥ इति श्रीसीतारामकृतायां नीतिप्रकाशिकातत्त्वविवृतौ षष्ठस्सर्गः ॥

## ॥ अथ सप्तमस्सर्गः ॥

(सैन्ययोगकथनम्)

मू.—अथ वैन्य प्रवक्ष्यामि सेनानयविवृद्धये ।
पत्तिमारभ्य गणनां यावदक्षौहिणीं तव ॥ १ ॥

व्या·—हे वैन्य वेनुपुत्र; पृथो इत्यर्थः । पत्तिं तदाख्यां ध्वजिनीम् । आरभ्योपक्रम्य । यावदक्षौहिणीं अक्षौहिणीपर्यन्तम् । तव वक्ष्यामीत्यन्वयः ॥ १ ॥

मू—शताङ्गानामिभानाञ्च सैन्धवानां महीपते ।
पदातीनाञ्च भद्रं ते सैन्यस्थानां विशेषतः ॥ २ ॥

व्या.—शताङ्गानां रथानां । "शताङ्गस्स्यन्दनो रथ" इत्यमरः । इभानां गजानां । सैन्धवानां हयानां । "हयसैन्धवसप्तय" इत्यमरः । भद्रं ते इति वाक् सौमङ्गल्यद्योतनार्थम् सैन्यस्थानां सेनासमूहविद्यमानानां । गणनामिति पूर्वश्लोकेनान्वयः । २ ॥

मू·—पत्तिस्सेनामुखं गुल्मं गणो वै वाहिनी ततः ।
पृतना चम्वनीकिन्यौ ततश्चाक्षौहिणी स्मृता ॥ ३ ॥

एते सेनाविशेषा वै पत्तौ मुख्यान् वदामि ते ।
रथं नागं तुरङ्गांश्च पदातींश्च विशेषतः ॥ ४ ॥

एको रथो गजश्चैको नराः पञ्च हयास्त्रयः ।
यस्यां सा पत्तिरेतेषां सहायान्प्रब्रुवेऽधुना ॥ ५ ॥

व्या—एतेषां रथगजतुरगपदातीनाम् ॥ ५ ॥

मू·—नागा दश रथस्यास्य शतमश्वास्सहानुगाः ।
सहस्रं तु नराः प्रोक्ताः परिवारा नृपाज्ञया ॥ ६ ॥

व्या·—अस्य रथस्य पत्तिरूपसेनामुख्यनायकसमेतरथस्य शतमश्वाः । नागाः गजाः दश । सहस्रं सहस्रसङ्ख्याकाः नराः पादचारिणः

सहान्योन्यसहायभूताः । अनुगा अनुसारिणः । परिवारास्सेवकाः नृपाज्ञया राजशासनेन प्रोक्ताः नियमिता भवेयुरिति शेषः । शतं ब्राह्मणा इतिवत् ॥ ६ ॥

मू·—एकस्यैकस्य नागस्य शतमश्वाः प्रयायिनः ।
पदातयस्सहस्रं तु प्रत्यङ्गेष्वनुयायिनः ॥ ७ ॥

व्या·—एकस्यैकरथरक्षाविधौ नियमितदशगजेषु प्रत्येकं प्रत्येकमेकैकस्येत्यर्थः । शतमश्वाः प्रयायिनः पादरक्षार्थं नियमिताः सेनाङ्गेषु चतुर्विधसेनाङ्गघटकभूताः अनुयायिनस्सेवकाः ॥ ७ ॥

मू·—एकस्यैकस्य चाश्वस्य सहस्रं तु पदातयः ।
दश चैतान् पतीन् युक्त्वा कात्स्न्र्येन गणना त्वियम् ॥ ८ ॥

व्या·—एकस्यैकस्य चाश्वस्य च गजपादसंरक्षणनियमिताश्वशतेषु प्रत्येकमेकस्यैकस्य हयस्य च सहस्रं पदातयः पादचारिणः अनुयायिन इति पूर्वेण सम्बन्धः । दशैतान् । "एको रथो गजश्चैको नराः पञ्च हयास्त्रयः" इत्यादिनोक्तान् पत्तीन् । सर्वनायकरथिकसहितरथनवगजनायकाधिपैकगजपतिसहितगजसप्तनवत्युत्तरनवशतहयपतिसहिताश्वसादित्रयाश्वत्रयपञ्चनवत्युत्तरशतनवकाधिकनवकवातिसहस्रनायकपञ्चपदातिनायकान् । युक्त्वा मेलयित्वा । रथिकादिनिष्ठपत्तित्वस्य रथादिषूपचारः । कात्स्न्र्येन साकल्येन । इयं वक्ष्यमाणगणना बोध्येति शेषः । तथाचायं फलितोऽर्थः । सर्वाधिपो रथिकः । गजाधिपाज्ञायां न रथिकः । अश्वाधिपाज्ञायां न गजी । पत्तिनायकाज्ञायां नाश्वपतयः । त्रयो यथाभागं स्वस्वपरिवारसहितानां सजातीयानां गजपतिप्रभृतयः सेनामुखादिषु रथिकास्स्वतन्त्रपतयः तेऽपि स्वोत्कृष्टसेनापतिवशवर्तिनस्स्युरिति ॥ ८ ॥

मू·—एको रथो दश गजाः सहस्रश्चापि वाजिनः ।
लक्षसङ्ख्या नराः पत्तावेवमग्रेऽपि योजना ॥ ९ ॥

व्या.—मिलितानां पत्त्यादिसेनास्थानां सर्वेषां गणनां वक्ति—एको रथ इत्यादिना। पत्तौ पत्त्याख्यसमूहेषु। घटकाः। रथः एकः। गजा १० वाजिनः १००० नराः पदातयः १००००० । अग्रेऽपि सेनामुखादावप्येवं योजना ॥ ९ ॥

मू.—पत्त्यङ्गैस्त्रिगुणैस्सर्वैः क्रमादाख्या यथोत्तरम् ।
अनीकिनीं दशगुणामाहुरक्षौहिणीं बुधाः ॥ १० ॥

व्या.—यथोत्तरमनीकिनीपर्यन्तम् दशगुणा अक्षौहिणी ॥ १० ॥

मू. सेनामुखे तु गुणितास्त्रयश्चैव रथा गजाः ।
त्रिंशत्त्रिलक्षपदगास्त्रिसहस्रं हि वाजिनः ॥ ११ ॥

व्या.—सेनामुखे रथाः ३, गजाः ३०, वाजिनः ३०००, पदगाः ३००००० ॥ ११ ॥

मू.—गुल्मे नव रथाः प्रोक्ता नागानां नवतिं विदुः ।
अश्वानां नव साहस्रं नवलक्षाः पदातयः ॥ १२ ॥

व्या. गुल्मे रथाः ९. गजाः ९०, अश्वाः ९०००, पदातयः ९०००००, विदुर्नीतिज्ञा इति शेषः ॥ १२ ॥

मू.—गणाख्ये तु शताङ्गानां वराणां सप्तविंशतिः ।
स्तम्बेरमाणां द्विशतं सप्ततिं प्राहुरार्यकाः १३ ॥

सप्तविंशतिसाहस्रं गन्धर्वाः परिकीर्तिताः ।
सप्तविंशतिलक्षास्तु स्मृताश्चात्र पदातयः ॥ १४ ॥

व्या.—गणाख्ये गणनामकचतुर्थव्यूहे २७। शताङ्गा रथाः "शताङ्गस्स्यन्दनो रथ" इत्यमरः। गजाः २७०। आर्यका मारिषाः। "वासुरार्यस्तु मारिषः"। इत्यमर। गन्धर्वा अश्वाः २७००० पदातयः २७०००००। अत्र गणे ॥ १४ ॥

मू.—वाहिन्यां स्यन्दनाः प्रोक्ता ह्येकाशीत्या नियोजिताः ।
दशोत्तराष्टशतकाः पाद्मिनश्चात्र कीर्तिताः ॥ १५ ॥

एकाशीतिसहस्रास्तु तुरङ्गाः सम्प्रकीर्तिताः ।
एकाशीतिकलक्षा वै विख्याताः पादचारिणः ॥ १६ ॥

व्या.—वाहिन्यां तदाख्यध्वजिन्यामेकाशीत्या एकाशीतिसंख्यया नियोजिता युक्तीकृताः स्यन्दनाः ८१ । पद्मिन इभाः "इभःस्तम्भेरमः पद्मी, इत्यमरः" ८१० । कीर्तितास्तिष्ठन्तीति विख्याताः । तुरङ्गाः ८१००० पादचारिणः ८१००००० ॥ १५-१६ ॥

मू.—त्रयश्च चत्वारिंशच्च द्विशतं पृतनारथाः ।
चतुश्शतश्च त्रिंशच्च द्वे सहस्रे च दन्तिनाम् ॥ १७ ॥
तुरङ्गाणां सहस्राणि त्रिचत्वारिंशदेव तु ।
द्वे लक्षे चैव राजेन्द्र द्वे कोटी च नृणां भवेत् १८ ॥
त्रिचत्वारिंशच्च लक्षं पदातीनां निबोध मे ।

व्या.—पृतनायां पृतनाख्यसेनायां रथाः २४३ । दन्तिनो गजाः २४३० । तुरङ्गाः २४३००० । पदातीनां सङ्ख्यामाह द्वे कोटी चेत्यादिना । पदातीनां नृणामित्यन्वयः । पादचारिणः २४३००००० । मे मत्तो, निबोध अवेहि ॥ १७-१८$\frac{1}{2}$ ॥

श्रोतॄणामनुपेक्षणीयत्वरूपशिष्यावधानाय मध्ये मध्ये प्रतिज्ञा कार्येति मत्वा तामाह । चम्वाख्येत्यादिना ।

मू.—चम्वाख्ये सप्तमव्यूहे गणनां वच्मि विस्तरात् ॥ १९ ॥
चम्वां सप्तशतश्चैकन्यूनत्रिंशद्रथास्स्मृताः ।
सप्तैव च सहस्राणि द्वे शते नवतिस्तथा ॥ २० ॥
गजानां सप्तलक्षाणि चैकोनत्रिंशदेव तु ।
सहस्राणि हयानाश्च पदातीनामथो श्रृणु ॥ २१ ॥
सप्तकोटयश्च चैकोनत्रिंशल्लक्षाणि भूपते ।
जगुर्गणिततत्वज्ञा गणानां बुद्धिजीविनः ॥ २२ ॥

व्या.—सप्तमे व्यूहे पत्तिमारभ्य सप्तमसैन्ये गणानां रथगजतुरगपदातीनां सङ्ख्यां विस्तराद्वक्ष्यामि ॥ १९ ॥

अत्र विशेषः । उद्योगपर्वणि १९४ तमेऽध्याये यथा—

यथा रथास्तथा नागाः बद्धकक्ष्याः स्वलङ्कृताः ।
बभूवुस्सप्तपुरुषा रत्नपन्तुलवाद्दयः ॥ (?)
द्वावङ्कुशधरौ तेषु द्वावुत्तमधनुर्धरौ ।
द्वौ वरासिधरौ राजन्नेकः छत्रपताकधृत् ॥
गजैर्मत्तैस्समाकीर्णं सर्वमायुधकोशकैः ।
रथस्यासन् दश गजा गजस्य दश वाजिनः ॥
नरा दश हयस्यासन्पदरक्षाः समन्ततः ।
रथस्य नागाः पञ्चासन्नागस्यासंस्तथा हयाः ॥
हयस्य पुरुषास्सप्त भिन्नसन्धानकारिणः ।
सेना पञ्चशतं नागाः रथास्तावन्त एव च ॥
पञ्चाशच्च शतञ्चाश्वा नराः पञ्चगुणास्ततः ।
दशसेना च पृतना" इत्यादि ।

चम्वां रथाः ७२९ । गजाः ७२९० ॥ २० ॥

सप्तलक्षाणीत्यादिना अश्वसंख्या । गजानामिति पूर्वान्वयी हयाः ७२९००० । अथो इत्यश्वसङ्ख्यानन्तर्यबोधकमव्ययम् । "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः ॥ २१ ॥

पादचारिणः ७२९००००० । गणानां पादातगणानाम् ॥ २२ ॥

मू.—अनीकिन्यां द्वे सहस्रे सप्ताशीत्यधिकं शतम् ।
रथानामथ नागानां गणनां वच्मि तेऽनघ ॥ २३ ॥

एकविंशत्सहस्राणि तथाचाष्टशतं नृप ।
सप्ततिश्चेत्यथाश्वानां संख्यां शृणु समाहितः ॥ २४ ॥

एकविंशतिलक्षाणि सप्ताशीतिं सहस्रकम् ।
एकविंशतिकोटयश्च पदातीनां नराधिप ॥ २५

सप्ताशीतिश्च लक्षाणां विद्धि बुद्धिमतां वर ।
एतद्दशगुणा या स्यात्तान्त्वमक्षौहिणीं शृणु ॥ २६ ॥

व्या.—अनीकिन्यां तदाख्यसेनायां रथाः २१८७ । नागाः २१८७० । अनघ अमोघपराक्रम ! । समाहितः सावधानचित्तः । अश्वाः २१८७००० । पदातयः पत्तयः २१८७०००००० । हे नराधिप पृथो । जनमेजयसम्बोधनं वा ।। २५ ।। एतद्दशगुणानीकिनी दशगुणां शृणु गणनापूर्वकमाकर्णयेत्यर्थः ।। २६ ।।

मू.—अक्षौहिण्यान्त्वेकविंशत्सहस्राणि जनाधिप ।
तथाचाष्टशतञ्चैव सप्ततिं रथगां विदुः ।। २७ ।।

अष्टादश सहस्राणि द्वे लक्षे च नरेश्वर ।
तथा सप्तशतञ्चैव गजानां गणना त्वियम् ।। २८ ।।

द्वे कोटी चैव लक्षाणामष्टादश महीपते ।
तथा सप्ततिसाहस्रा गन्धर्वाश्शीघ्रयायिनः ।। २९ ।।

द्वे चार्बुदे च कोटिश्चाप्यष्टादश समीरिता ।
लक्षाणां सप्ततिश्चैव पदातीनामितीर्यते ।। ३० ।।

एतानक्षौहिणीसंस्थान्विना राज्ञो रथा गजाः ।
अश्वास्स्वतन्त्रास्सन्त्यन्ये पृष्ठगोपा नृपस्य ते ।। ३१ ।।

व्या.—अक्षौहिण्यां रथाः २१८७० । रथं गामिनीति रथगा । तां । सप्ततिमित्यर्थः ।। २७ ।।

गजाः २१८७०० । इयं तावती गणना ।। २८ ।।

गंधर्वा अश्वा. २१८७०००० । लक्षाणामष्टादश अष्टादशलक्षसङ्ख्याकास्सप्ततिसाहस्राः । सहस्राण्येव साहस्राणि । सप्ततिसहस्राणि गणिता येषां ते सप्ततिसाहस्राः । शीघ्रयायिनो जवप्रयातारः ।। २९ ।।

पदातयः २१८७०००००० । लक्षाणां सप्ततिः । सप्ततिलक्षाणीत्यर्थः । इयती एतावत्प्रमाणवती पदातीनां गणनेति शेषः । इतीति चाक्षौहिण्या गणनासमाप्तिवाचकश्शब्दः ।। ३० ।।

अक्षौहिणीसंस्थान् तस्यां गजितान्विना । अन्ये तद्भिन्ना इत्यर्थः । रथाः । गजाः अश्वाः । नृपस्य पृष्ठगोपाः देहरक्षकाः । स्वतन्त्रा अधिराजाभिन्नाज्ञायामवर्तमाना इत्यर्थः । सन्ति नीनिशास्त्रतिद्धास्तिष्ठन्ति ॥ ३१ ॥

मू.—पत्त्याद्यङ्गे ध्वजपटाः पृथक्कार्या विशेषतः ।
स्वसैन्यस्य च शत्रोश्च वैलक्षण्यस्य सिद्धये । ३२ ॥

व्या. —विशेषतो विविधवर्णभेदतः ॥ ३२ ॥

मू.—युवराजाय वर्षाणां पञ्चसाहस्रिकी भृतिः ।
पर्वसेनाप्रणेत्रे च चतुस्साहस्त्रिकी च सा ॥ ३३ ॥

व्या.—प्रसङ्गाद्युवराजादिराजकीयानां मासिकवेतनं विविच्याह युवराजायेत्यादिना । युवराजाय राज्यतन्त्रविचारणकुशलराजपुत्रतद्भ्रातृदौहित्रादिरूपाय "पुत्रो भ्राताथ दौहित्रो राज्ञा यो राज्यचिन्तकः । स्वेन स्वकृत्येऽधिकृतो युवराजं हि तं विदुरि"ति शौनकस्मरणात् । पर्वाणां पूर्वोक्तमुद्रिणां पञ्चसाहस्रिकी पञ्चसहस्त्रसङ्ख्याका । भृतिर्मासिमासि दीयमानवेतनमित्यर्थः । सा भृतिरित्यर्थः ॥ ३३ ॥

मू.—भृतिश्चातिरथे देया वर्षाणां द्विसहस्रकम् ।
महारथाय साहस्रद्वयंराज्ञाऽधिमासकम् ॥ ३४ ॥

व्या.—अतिरथे पूर्वोक्तलक्षणे । अधिमासिकं त्रिंशद्दिननियमितं जीवनम् ॥ ३४ ॥

मू.—वेतनं रथिकायाथ साहस्रं गजयोधिने ।
दद्यादर्धरथायाथ वेतनं शतपञ्चकम् ॥ ३५ ॥

व्या.—साहस्रं सहस्रवर्षसङ्ख्याकवेतनम् । शतपञ्चकं पञ्चशतसङ्ख्याकमित्यर्थः । रथिकाय रथाधिपतये गजयोधिने गजैर्युक्तो यो युध्यति तस्मै शत्रूनुद्दिश्य युद्धतत्पराय । गजाधिपतय इति यावत् ॥ ३५ ॥

मू.—एकस्मै रथिकायाथ तादृशे गजसादिने ।
नि(ष्)काणां त्रिंशतं दद्याद्यतरतो तत्कुटुम्बिनो ॥ ३६ ॥

व्या.—एकस्मै रथिकाय एकरथनाथाय । तत्कुटुम्बिनौ तद्रक्षकौ ॥ ३६ ॥

मू.—सर्वाश्वाधिपती राज्ञः त्रिसाहस्रं स चार्हति ।
पादाताधिपतिश्चापि द्विसाहस्रस्य भाजनम् ॥ ३७ ॥

व्या.—सर्वाश्वानामधिपतिर्नायकः । राज्ञस्सकाशात् ॥ ३७ ॥

पादातानां सहस्रस्य नेत्रे पंचशतं स्मृतम् ।
तथाचाश्वसहस्रेशे सहस्रं वेतनं भवेत् ॥ ३८ ॥

पदातये सुवर्णानां पञ्चकं वेतनं भवेत् ।
शतपत्त्यधिपे सप्त वर्वाणां हययायिने ॥ ३९ ॥

व्या.—नेत्रे नायकाय । "अधिभूर्नायको नेता" इत्यमरः । सहस्रं सर्वत्र बर्वाणामित्यनुषज्यते ॥ ३८ ॥

सुवर्णानां वर्वाणां । हययायिने । एकाश्वनायकाय । वर्वाणां सप्त वेतनं-पदातिशतनायके इवेत्यर्थः ॥ ३९ ॥

मूः—गजयन्तुरस्सारथेश्च ध्वजिने चक्रपाय च ।
पदातित्रिशतेशाय पथिकोष्ट्रचराय च ॥ ४० ॥

वार्तिकाधिपतेश्चाऽपि वेत्रिणां पतये तथा ।
सूतमागधवन्दीनां पतये वीवधाधिपे ॥ ४१ ॥

सेनाया भृतिदात्रे च भटानां गणनापरे ।
मासि मासि तु वर्वाणां दश पञ्च च वेतनम् ॥ ४२ ॥

व्या.—गजयन्तुर्हस्तिपकाय । ध्वजिने ध्वजस्तम्भाधारकाय । चक्रपाय चक्ररक्षकाय । पथिकोष्ट्रचराय पन्थानमेकदिनेन त्रिंशत्क्रोशमितमार्गं यच्छति य. पथिक । तादृशश्चासावुष्ट्रश्च तेन चरायोष्ट्रवार्तिकायेत्यर्थः ॥ ४० ॥

वार्तिकानां शत्रुराष्ट्रवार्ताहराणां । अधिपतेः । वेत्रिणां यष्टिधरदूतानाम् । वीवधाधिपे । वीवधो धान्यादेः प्राप्तिः । तस्याधिपः । तद्विचारणकर्ता । "धान्यादेर्वीवधप्राप्ति"रिति कोशः ॥ ४१ ॥

भृतिदात्रे वेतनदानाधिकृताय । भटानां गणनापरे अन्यूनाधिकविचाराधिकृताय । दशपञ्च पञ्चदशेत्यर्थः ॥ ४२ ॥

मू.—तत्तत्कार्यानुसारेण कुलपर्यायतस्तथा ।
भटानान्तु भृतिः कल्प्या तत्तत्कालानुसारतः ॥ ४३ ॥

व्या.—तच्च तच्च तत्तत् । तत्तच्च तत् कार्यञ्च तत्तत्कार्यं । तस्यानुसारोऽनुरोधः । तेन । कुलपर्यायतः कुलक्रमानुरोधेन । तत्तत्कालानुसारतः दूरगमनयुद्धकालानुसारात् ॥ ४३ ॥

मू.—आहवेषु मिथश्शूरा जिघांसन्तो महीक्षितः ।
युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥ ४४ ॥

व्या.—ननु बुद्धिपूर्वकं युद्धे मृतस्यात्मघातरूपदोषस्स्यादित्याशङ्क्याह-प्रत्यवायो नास्ति प्रत्युत पुण्यलोकावाप्तिरस्तीत्याह आहवेष्विति । अपराङ्मुखा अभिमुखं युध्यमानाः । शक्त्या परं स्वसामर्थ्यानुसारेण स्वर्गं यान्ति । इह देहं त्यक्त्वेति शेषः । "द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हत इति" पराशरोक्तेः ॥ ४४ ॥

मू.—न कूटैरायुधैर्हन्याद्युध्यमानो रणे रिपून् ।
दिग्धैरग्न्युज्वलैर्यन्त्रैस्तन्त्रैश्चैव पृथग्विधैः ॥ ४५ ॥

व्या.—कूटैः कपटप्रहारसाधनैः । तान्येव विवृणोति दिग्धैरित्यादिना । दिग्धैर्विषलिप्तैः । अग्न्युज्वलैर्ज्वलत्काष्ठैः । यन्त्रैरुपलोक्षेपकैः । तन्त्रैः कृत्यादिक्षुद्रप्रयोगैः ॥ ४५ ॥

मू.—न हन्याद्वृक्षमारूढं न क्लीबं न कृताञ्जलिम् ।
न मुक्तकेशं नासीनं न तवाऽस्मीति वादिनम् ॥ ४६ ॥

व्या.—तवास्मीति वादिनं शरणागतम् ॥ ४६ ॥

मू—न प्रसुप्तं न प्रणतं न नग्नं न निरायुधम् ।
नायुध्यमानं पश्यन्तं न परेण समागतम् ॥ ४७ ॥

व्या.—अयुध्यमानं युद्धश्रान्तम् । पश्यन्तं विनोदार्थिनम् । राजभृत्यत्वरहितमित्यर्थः । परेण समागतमन्येन सह युद्धं कुर्वन्तम् । उदासीनं न हन्यादित्यर्थः ॥ ४७ ॥

मू.—आयुधव्यसनम्प्राप्तं नार्तं नातिपरीक्षितम् ।
न हीनं न परावृत्तं न च वल्मीकमाश्रितम् ॥ ४८ ॥

व्या.—आयुधव्यसनमुपकरणस्खलनं प्राप्तम् । वस्तुत आयुधरहितमिति न पौनरुक्त्यम् । नातिपरीक्षितं शस्त्रशिक्षापरीक्षारहितम् । परावृत्तं युद्धात्पश्चान्निवृत्तम् ॥ ४८ ॥

मू.—न मुखे तृणिन हन्यान्न स्त्रियो वेषधारिणम् ।
एतादृशान् भटैर्वापि घातयन् किल्बिषी भवेत् ॥ ४९ ॥

व्या.—मुखे तृणिनं मुखावच्छेदेन तृणधारिणम् । स्त्रियोवेषधारिणम् । स्वयं न हन्यादिति सर्वत्र योज्यम् ॥ ४९ ॥

मू.—हन्यमानस्य यत्किञ्चिद्दुष्कृतं पूर्वसञ्चितम् ।
तत्सङ्गृह्य स्वसुकृतं तेभ्यो दद्यात्तथाविधः ॥ ५० ॥

व्या.—हन्यमानस्य हननशीलस्य । हननकर्मीभूतस्य । स्वस्य हननकर्तुः । सुकृतम् तेभ्यो हन्यमानेभ्यः । तथाविधः घातकः ॥ ५० ॥

मू.—मार्गशीर्षे शुभे मासि कुर्याद्यात्रां महीपतिः ।
फाल्गुने वापि चैत्रे वा यदा पश्येद्ध्रुवं जयम् ॥ ५१ ॥

व्या.—यात्राकालमाह-मार्गशीर्षेत्यादिना । जयं जयसाधनस्वशक्त्युपचयादि ॥ ५१ ॥

मू.—शत्रुसेविनि मित्रे च गूढयत्नतमो भवेत् ।
गतप्रत्यागते चैव स हि कष्टतमो रिपुः ॥ ५२ ॥

व्या.—शत्रुसेविनि शत्रूपजापवति । मित्रे भिन्नप्रवादे । गतप्रत्यागते गतसहितप्रत्यागते । गते गमने प्रत्यागते चेत्यर्थः । स हि कष्टतमोऽतिक्रूरः । रिपुर्वा ॥ ५२ ॥

मू.—दण्डव्यूहेन सेनान्तु नयेत्तु शकटेन वा ।
वराहगरुडाभ्यां वा सूच्या वा मकरेण वा ॥ ५३ ॥

व्या.—नयेत् चारयेत् ॥ ५३ ॥

मू.—यतो भवेद्भयं शत्रोस्ततो विस्तारयेद्बलम् ।
सेनापतिबलाध्यक्षौ सर्वदिक्षु निवेशयेत् ॥ ५४ ॥

व्या.—शत्रोः भयं शत्रुसकाशाद्भीतिः । यतो यादृशप्रदेशात् । ततस्तदभिमुखितया विस्तारयेदधिकगुल्मस्थापनपूर्वकस्कन्धावारकल्पनया प्रसारयेत् । सेनापति सर्वसेनानायकः बलाध्यक्षः स्वल्पसेनानायक इति भेदः ॥ ५४ । सर्वदिक्षु सेनायाः परितः प्रवेशनिर्गममार्गेषु ।

मू.—यतश्शङ्का भवेद्भीतः तां प्राचीं कल्पयेद्दिशम् ।
सूच्या वक्रेण चैवैनान् योधयेद्व्यूह्य वैरिणः ॥ ५५ ॥

व्या.—तां दिशं प्राचीमभिमुखदिशं कल्पयेत् । कुर्यात् । एनान्वैरिण इत्यन्वयः ॥ ५५ ॥

मू.—गुल्मांश्च स्थापयेदाप्तान् कृतसंज्ञान् समन्ततः ।
स्थाने युद्धे च कुशलानभीरूनभिघातिनः ॥ ५६ ॥

व्या.—कृतसंज्ञान्राजमुद्राचिह्नान् । ध्वजादिचिह्नवतो वा । स्थानेऽवस्थितौ ॥ ५६ ॥

मू.—यवसान्नोदकधनान्युपरुन्ध्याद्रिपोर्युधि ।
चेष्टाश्चैव विजानीयादरीन् योधयता स्वयम् ॥ ५७ ॥

व्या.—रिपोर्यवसान्नोदकधनानि यवसधान्यजलद्रव्याण्युपरुन्ध्यान्मध्येमार्गे स्वसैन्यं संस्थाप्य निरुन्ध्यादित्यर्थः । अरीन्योधयतां स्वशूराणां चेष्टा अकपटकृत्यानि स्वयमेव विजानीयात् ॥ ५७ ॥

मू.—उपजप्यानुपजपेद्भेद्यांश्चैव विभेदयेत् ।
लुब्धान् दानेन बिभृयाच्छत्रोर्योधान्यथोचितम् ॥ ५८ ॥

व्या.—उपजप्यान् जनान्तिकपूर्वकम्बुद्धिभेदकान् । भेद्यान् कलहप्रियान् । भेदयेन्मिथो वैरिणः कुर्यात् ॥ ५८ ॥

मू.—तादृशानेव स्वीयांस्तु शिक्षयेदविचारयन् ।
गोपयेत्स्वीयमार्गांश्च परमर्मपरो नृपः ॥ ५९ ॥

व्या —तादृशान् शत्रुकृतोपजापतत्परान् परस्परभेदपरान् बुद्ध्वेति शेषः। अविचारयन् शास्त्रप्रामाण्येन निश्चिन्तं शिक्षयेत्। परमर्मपरः शत्रुमर्मग्रहणतत्परः ॥ ५९ ॥

मू.—युद्धकाले ह्यनुप्राप्ते स्वीयाज्ञापरिपन्थिनाम्।
पलायनपराणाञ्च स्वयोधानामुपेक्षिणाम् ॥ ६० ॥
व्याजेन युद्ध्यताञ्चैव सैन्यपानां सुलोभिनाम्।
पराङ्मुखपराणाञ्च मिथो योधविभेदिनाम् ॥ ६१ ॥
शत्रुषु स्वीयमार्गांश्च व्याजात् ख्यापयतां स्फुटम्।
रिपूणां मार्गदातॄणां स्वापदञ्चाभिनन्दताम् ॥ ६२ ॥
तेषां प्राणान्तिको दण्डो राज्ञा कार्यो विजानता।
सुमहत्यपराधेऽपि दूतवध्या विगर्हिता ॥ ६३ ॥

व्या.—स्वीयाज्ञापरिपन्थिनां स्वकृताज्ञाविरोधिकृत्यवतामित्यर्थः। उपेक्षिणां स्वस्वामिजयोपेक्षावताम् ॥ ६० ॥

व्याजेन युद्ध्यताम्। शत्रुयोधाऽपातनं यथा तथा युद्धं कुर्वताम् सुलोभिनां परदत्तद्रव्यलोभयुक्तानाम्। मिथः। अन्योन्यं स्वसैन्ययोधविभेदिनाम्। शत्रुजयानुकूलान्कुर्वताम् ॥ ६१ ॥

व्याजादन्यार्थतया पत्रलेखनपूर्वकं वस्तुप्रेषणपूर्वकं वा कपटात् मार्गदातॄणां सस्यादिग्रहणार्थं विवरदातॄणाम्। स्वापदं राजावमानमभिनन्दताम् ॥ ६२ ॥

विजानता शिक्षाशास्त्रनिपुणेन। दूतानां शत्रोर्वार्ताहराणाम्। "स्यात्सन्देशहरो दूत" इत्यमरः ॥ ६३ ॥

मू.—योऽदण्ड्यान्मोचयेद्राजा सम्यग्दण्ड्यांश्च घातयेत्।
इष्टं भवेत्क्रतुशतैस्तेन धर्मानुयायिना ॥ ६४ ॥

॥ इति वैशम्पायननीतिप्रकाशिकायां सैन्ययोगकथनं नाम सप्तमस्सर्गः ॥

व्या.—धर्मानुवर्तिना धर्मशास्त्रानुसारिणा ॥ ६४ ॥

॥ इति श्रीसीतारामकृतायां नीतिप्रकाशिकातत्वविवृतौ सप्तमस्सर्गः ॥

## अथाष्टमस्सर्गः ।

(राजव्यापारकथनम्)

मू.—राजधर्मान् प्रवक्ष्यामि यथावृत्तो भवेन्नरः ।
लोकरञ्जनमेवात्र राज्ञो धर्मः सनातनः ॥ १ ॥

व्या.—राजधर्मान्प्रातरारभ्य स्वापपर्यन्तं राजकृत्यानि ॥ १ ॥

मू.—यथा हि गर्भिणी हित्वा स्व प्रियं मनसोऽनुगम् ।
गर्भस्य हितमाधत्ते तथा कुर्यात्प्रजाहितम् ॥ २ ॥

व्या.—जनसन्तोषकरणे दृष्टान्तमाह । यथा हीति—मनसोऽनुगं मनोऽनुकूलं स्वं प्रियं स्वभर्तारं हित्वा निबिडतरालिङ्गनादिषु त्यक्त्वा "स्वप्रियमिति पाठे तिक्तकटुकषायाद्याहारं त्यक्त्वेत्यर्थः । गर्भस्थजन्तोर्हितं पथ्यादिरूपं गर्भिणी षाण्मासिकादिगर्भधारिणी यथा तथा प्रजाहितं कुर्यादित्यर्थः ॥ २ ॥

मू.—अष्टभिर्लोकपालानां मात्राभिर्निर्मितो यतः ।
तस्मादभिवेद्राजा सर्वभूतानि तेजसा ॥ ३ ॥

व्या.—मात्राभिः कलाभिः ॥ ३ ॥

मू.—सोऽग्निर्भवति वायुश्च सोऽर्कस्सोमस्स धर्मपः ।
स कुबेरस्स वरुणः स महेन्द्रः प्रभावतः ॥ ४ ॥

व्या.—प्रभावतोऽग्न्यादिगुणसाधर्म्यादग्निः क्रोधे । वायुः स्वविरोध्यपसारणे । अर्कः प्रतापे । सोम आह्लादकल्पने । धर्मो न्यायविचारे । कुबेरः धनदाने । वरुणः क्षेमकृत्ये । महेन्द्रः परमैश्वर्ये ॥ ४ ॥

मू.—बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ ५ ॥

राजा सन्मानमर्हतीति न्यायमनुसृत्य तेजोवतां न वयः कारणमित्याह । बालोऽपीति—

महती देवता विष्णुरूपा देवता । नाविष्णुःपृथिवीपतिरिति न्यायात् । "एको विष्णुर्महद्भूतमिति" स्मृतेश्च ॥ ५ ॥

राजाविरोधिनां कुलहानिरित्याह एकमेवेति—

मू.—एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम् ।
कुलं दहति राजाग्निस्सपशुद्रव्यसञ्चयम् ॥ ६ ॥

व्या.—दुरुपसर्पिणं दुर्बुद्ध्योपसर्पमाणं तत्र पतन्तमित्यर्थः ॥ ६ ॥

मू.—तस्य प्रसादे पद्मश्रीर्विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे तस्मात्सर्वाश्रयस्तु सः ॥ ७ ॥

व्या.—प्रसादेऽनुग्रहे पद्माश्रया श्रीः सम्पदाद्यधिदेवता । "यस्य कोपे महाबाधः प्रसादश्च महाफल" इति न्यायादिति भावः । सर्वाश्रयः सम्पद्विपदुभयफलप्रद इत्यर्थः ॥ ७ ॥

मू.—अगूढविभवा यस्य पुरराष्ट्रनिवासिनः ।
नयापनयवेत्ता यस्स राजा त्विदमाचरेत् ॥ ८ ॥

व्या.—यस्य राज्ञः पुरवासिनः अगूढविभवाः निर्भयमनाच्छादितैश्वर्याः ।

अयं भावः—दुष्टे राजनि स्वैश्वर्यं जना न प्रकटयन्तीति तदैश्वर्यामोदको य इति बोध्यम् । नयापनयवेत्ता च यः नीत्यपनीतिपरिज्ञाता । स इदं वक्ष्यमाणम् ॥ ८ ॥

मू.—उत्थायापररात्रेषु चिन्तयेदर्थनिर्णयम् ।
गुणदोषान् स्वयं बुद्ध्वा कर्तव्यार्थे प्रसन्नधीः ॥ ९ ॥

व्या.—अर्थनिर्णयं प्रयोजननिश्चयम् । कर्तव्यार्थे मन्त्रिभिः पूर्वदिने कर्तव्यत्वेन निर्दिष्टे अभिधेये । गुणदोषौ स्वयं स्वयेमव । बुद्ध्वा विचार्य । प्रसन्नधीरितिकर्तव्यताबुद्धिस्सन् इत्यर्थः ॥ ९ ॥

मू.—दैवं हृदा दृढं ध्यात्वा कृत्वा मङ्गलपाठकम् ।
शुचिर्भूत्वा तु विधिवन्मङ्गलालम्बनं चरेत् ॥ १० ॥

व्या.—मङ्गलपाठकं स्तुतिपाठं विधिवदाचारकाण्डोक्तप्रकारेण । शुचिः 'एका लिङ्गे गुदे तिस्रः तथा वामकरे दश । पादयोर्मृत्तिकाषट्कं उभये सप्तमृत्तिका' इति शास्त्राचरणलब्धशुद्धिस्सन्नित्यर्थः । मङ्गलालम्बनं श्वेतगोपुच्छादिस्पर्शनरूपम् ॥ १० ॥

मू.—नित्यकर्म समाप्याथ नित्यदानं विधाय च ।
त्रैविद्यवृद्धान्नत्वा तु तिष्ठेदेषाञ्च शासने ॥ ११ ॥

व्या.—त्रैविद्यवृद्धान् साङ्गवेदत्रयाध्ययनाध्यापनेन ज्ञानवृद्धान् । नत्वा । एषां धनुर्वेदपराणां, शासने धनुर्विद्यादिशिक्षणरूपे । तिष्ठेदभ्यसेदित्यर्थः ॥ ११ ॥

मू.—तेभ्योऽधिगच्छेद्विनयं विनीतात्मा हि नित्यशः ।
वनस्थाश्चैव राज्यानि विनयात्प्रतिपेदिरे ॥ १२ ॥

व्या.—तेभ्यः त्रैविद्यवृद्धेभ्यः । विनयं नीतिं, विनयाभ्यासप्रयोजनमाह—वनस्थाश्चैवेति । वनस्था राज्यं हित्वा वने विद्यमाना विदुरापुत्रसञ्जयादयः(?) ॥ १२ ॥

मू.—इन्द्रियाणां जये योगमधितिष्ठेद्दिवानिशम् ।
जगज्जितेन्द्रियस्येदं वशे भवति नित्यदा ॥ १३ ॥

व्या.—जये तद्विषये योगं योगाभ्यासमुपायं वा । इन्द्रियजयस्य प्रयोजनमाह जगदिति ॥ १३ ॥

मू.—अरिषड्वर्गरहितो वेदशास्त्रपरश्शुचिः ।
प्रातः काले व्यतीते तु भूषितस्तु सभां व्रजेत् ॥ १४ ॥

व्या.—अरिषड्वर्गः कामक्रोधलोभमोहमद मात्सर्यरूपः तेन रहितः । वेदशास्त्रपरोऽभ्यासतत्परः । अत एव शुचिः स्वाध्यायरूपतपसा शुद्धः । "तपो हि स्वाध्याय" इति श्रुतेः ॥ १४ ॥

मू.—उच्चासनस्थो नृपती राज्यतन्त्रं विचारयेत् ।
धर्मासने समारोप्य विप्रं सुज्ञं पुरोहितम् ॥ १५ ॥

व्या.—धर्मासने धर्मविचारार्थं क्लृप्तस्वद्वितीयासने ॥ १५ ॥

मू.—जातिमात्रोपजीवी वा कामं स्याद्ब्राह्मणब्रुवः ।
धर्मप्रवक्ता नृपते न तु शूद्रः कथञ्चन ॥ १६ ॥

मू.—ब्राह्मणेतरस्य धर्मनियन्तृत्वे निषेधमाह—जातीति । जातिमात्रोपजीवी जातिमात्रेण जीवन् अकृतवेदशास्त्राध्ययनपूर्वकसत्क्रियः । अत एव ब्राह्मणब्रुवः अधमब्राह्मणः । वा शब्दस्समुच्चये । धर्मप्रवक्ता भवेत् । किंपुनस्सद्ब्राह्मण इति भावः ॥ १६ ॥

मू.—यस्य शूद्रस्तु कुरुते राज्ञो धर्मविवेचनम् ।
तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः ॥ १७ ॥

व्या.—धर्मविवेचनं धर्मविचारः । पश्यतः पश्यन्तं राजानमनादृत्येत्यर्थः । पङ्के कर्दमे ह्रदे गौरिव सीदति नश्यति ॥ १७ ॥

मू.—मौलाञ्छास्त्रविदश्शूरांल्लब्धलक्षान् कुलोद्भवान् ।
सचिवान् सप्त चाष्टौ वा कुर्वीत सुपरीक्षकान् ॥ १८ ॥

व्या.—मातापितृपितामहान् । शास्त्रविदो नीतिशास्त्रज्ञान् । शस्त्र विद इति पाठान्तरम् । लब्धलक्षान्विचक्षणान् । कुलोद्भवान् कुलीनान् । सुपरीक्षकांल्लोकमर्यादापरीक्षातत्परान् । सचिवानाप्तसहायार्थक्लृप्तमूलबल-नायकान् ॥ १८ ॥

मू.—सुमन्त्रिणः प्रकुर्वीत द्वौ वा त्रीन्न्यायवादिनः ।
तैस्सार्धं चिन्तयेदर्थान् पत्तनेऽर्थपरो नृपः ॥ १९ ॥

द्वारपालान् पृष्ठगोपान् सभानेतॄनथाश्रवान् ।
समाज्ञाप्य विधानेन सावधानमना भवेत् ॥ २० ॥

व्या.—न्यायवादिनो राज्यतन्त्रवक्तॄन् ॥ १९ ॥ सभानेतॄन् सभ्यमर्या-दाव्यवस्थापनाधिकृतान् । आश्रावानाज्ञाचालकान् । "वचने स्थित आश्रव" इत्यमरः । विधानेन प्रामुख्येन ॥ २० ॥

मू.—दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम् ।
इङ्गिताकारचेष्टाज्ञं शुचिं लालटिकं हितम् ॥ २१ ॥

व्या.—दूतं सन्देशहरणनायकम् । इङ्गितं पराभिप्रायः । आका-रोऽभिप्रायसूचकमुखविकासादिः । "आकारस्त्विङ्ग इङ्गितम्" इत्यमरः । चेष्टा हस्तभ्रूचलनादिः । ताः जानातीति इङ्गिताकारचेष्टाज्ञः । तं । लालाटिकं प्रभुभारदर्शिनम् । हितं राजहितङ्करम् ॥ २१ ॥

मू.—धर्मशास्त्रानुसारेण सामात्यस्सपुरोहितः ।
व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैस्सह ॥ २२ ॥

व्या.—धर्मशास्त्रानुसारेण धर्मनियामकव्यवहारकाण्डरीत्या । सपुरोहितः धर्माधिकारिब्राह्मणसहितः । व्यवहारानन्यविरोधेन स्वसम्बन्धितया कथनरूपान् । तेषामनेकविधत्वं व्यवहारनीतिबहुवचनस्वारस्यात् । नृप इत्यनेन क्षत्रियमात्रस्यायं न धर्मः किन्तु प्रजापालनेऽधिकृतस्याऽन्यस्यापीति दर्शितम् । विद्वद्भिर्वेदशास्त्राभिज्ञैर्ब्राह्मणैस्सहेति तृतीयानिर्देशात्तेषामप्राधान्यम् । सहयुक्तेऽप्रधानमिति स्मरणात् । अतश्चादर्शनेऽन्यथा दर्शने च स दोषो राज्ञ एव न ब्राह्मणानाम् । यथाह मनुः—

मू.—अदण्ड्यान् दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकञ्चाधिगच्छति ॥ इत्यलम् ॥ २२ ॥

सेनाकर्म समालोक्य भृतिं तेभ्यो विधाय च ।
दीनान्धकृपणानाञ्च वृत्तिं सम्यग्विचार्य च ॥ २३ ॥

आयव्ययेच विज्ञायायत्यभ्युदयं तदा ।
कृषीवलानां कृत्वा तु योगक्षेमौ च जीवनम् ॥ २४ ॥

दुर्भिक्षव्यसनोपेतान्विदित्वा तु परोक्षतः ।
तेभ्यः प्रदाय स्वद्रव्यं यथायोग्यं विवर्ध्य तान् ॥ २५ ॥

स्वद्रव्यमाहरेत्तेभ्यस्सुपुष्टेभ्यस्समाहितः ।
अवधेः पत्रिकां तेभ्यो लेखयित्वा स्वहस्ततः ॥ २६ ॥

व्या.—वृत्तिं जीवनम् ॥ २३ ॥ आयमादायं ॥ व्ययम् व्रयम् । आयत्यभ्युदयमुत्तरकाललाभानुकूलकृत्यम् । "उत्तरः काल आयति" रित्यमरः । कृषीवलानां कृष्या जीवनकर्तॄणाम् । योगक्षेमौ । अप्राप्तस्य प्राप्तिर्योगः । स्थितस्य संरक्षणं क्षेमः । तौ कृत्वेत्यर्थः ॥ २४ ॥

परोक्षतस्तद्वचनं विना स्वचारमुखेनेत्यर्थः । तेभ्यो दुर्भिक्षव्यसनयुक्तेभ्यः । कृषीवलेभ्यः स्वद्रव्यं प्रदाय न्यासविधिना दत्वा । तत्रापि यथायोग्यं दानं निस्वेभ्योऽधिकद्रव्यदानम् । स्वद्रव्यस्य हान्यापत्तेरित्यर्थः ॥ २५ ॥

स्वहस्ततो लेखयित्वा तद्धस्तचिह्नतां कृत्वा ॥ २६ ॥

मू.—उन्मोच्य चाधिकारिभ्यो भयात् क्षुद्रान् स्वयं नृपः ।
पारितोषिकवस्त्राणि तेषां दत्वा यथाविधि ॥ २७ ॥

वाचा तान् भीषयित्वा तु हृदयार्द्रो महीपतिः ॥
व्यवस्थां विदधन्नेभ्यस्सामदानविचक्षणः ॥ २८ ॥

व्या.—अधिकारिभ्यो जनपदाधिकृतेभ्यः। भीतान् क्षुद्रान् दुर्बलान्। पारितोषिकवस्त्राणि तेषां स्वोपरिसन्तोषजननार्थम् ॥ २७ ॥

वाचा वाङ्मात्रेण। न तु कार्यतः। हृदयार्द्रः हृदये दयया युतः। एभ्यो नीवृज्जनेभ्य। व्यवस्थामनेन प्रकारेण "युष्मान् परिपालयामीति वाक्प्रामाण्यरूपान् सामदानविचक्षणः सामदानप्रचारनिपुणस्सन् विदधन्। कर्ता भूयादित्यर्थः ॥ २८ ॥

मू.—चरितानि विचार्यैवं चारेभ्यश्चाधिकारिणाम्।
दुष्टानां शिक्षणं कुर्याद्दण्डनीतिप्रवर्तकः ॥ २९ ॥

व्या.—अधिकारिणां तत्तदुद्योगनियमितानां चरितानि दुष्टादुष्टकृत्यानि। दुष्टानामविहितशत्रूणां शिक्षणं। अग्रे दुष्कृत्यनिरासकशिक्षा दण्डः। शिक्षणम्। नीतिप्रवर्तको नीतिशास्त्रचालकः ॥ २९ ॥

मू.—यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा।
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥ ३० ॥

व्या.—दण्डदेवतास्वरूपमाह यत्रेत्यादिना। नेता राजा साधु पश्यति सम्यक् दण्डं प्रचारयति चोदित्यर्थः ॥ ३० ॥

मू.—अकालक्रयविक्रेयकर्तॄणां स्वार्थकामिनाम्।
प्रजाभ्यो दायकर्तॄणां स्वामिकार्यविघातिनाम् ॥ ३१ ॥

प्रजोद्वेजनकर्तॄणामुग्रदण्डेन दुःखतः।
गोदेवब्राह्मणस्वानां हर्तॄणां लोभदोषतः ॥ ३२ ॥

राजाज्ञाप्रतिबन्दीनां राजद्रोहपरात्मनाम्।
स्वराजचरिताख्यानकर्तॄणां शत्रुराजके ॥ ३३ ॥

सेतुभेदकराणाञ्च चोरमोचनकारिणाम्।
राजस्वे च प्रपात्तानां राजकोशापहारिणाम् ॥ ३४ ॥

स्वाधीनादिकृतानांतु वेतनार्धं प्रगृह्णतां।
स्वयोधभेदकर्तॄणामभिचाररतात्मनाम् ॥ ३५ ॥

अपलापप्रसक्तानां स्ववाक्ये राजसान्निधौ ।
राजस्वेऽन्यत्वकर्तृणां तटाकारामघातिनाम् ॥ ३६ ॥

शिक्षणार्थं चरा योज्यास्तेभ्यो विज्ञाय तत्वतः ।
तेषां व्यतिक्रमं पश्चात् शिक्षयेन्नीतिमार्गतः ॥ ३७ ॥

व्या.—अकाले स्वराज्याननुकूलसमये । क्रयो धान्यादिकं दत्वा द्रव्यग्रहणम् । विक्रयो राजद्रव्यं दत्वा धान्यादिक्रयं दत्वा धान्यादिग्रहणं । तत्कर्तॄणां । स्वार्थकामिनां अकाले राजधान्यादिक्रयं स्वयं कुर्वतामित्यर्थः । दायहर्तॄणां गुप्तद्रव्यहारिणाम् ॥ ३१ ॥

दुःखतः अन्तः स्वस्य द्रव्याद्यदानदुःखवशात् ॥ ३२ ॥

राज्ञां द्रोहोऽनिष्टचिन्तनम् । तत्र परः आसक्तः आत्मा चित्तं येषां । स्वराजा स्वस्वामी । तस्य यानि चरितानि किञ्चिदन्यायव्यवहारदर्शनादीनि । तेषामाख्यानं कुर्वन्तीति तादृशाः । तेषां । शत्रुराजके तत्समूहे ॥ ॥ ३३ ॥

सेतुभेदकराणां मर्यादाविच्छेदनकराणां अथवा नद्यादिसेतुव्यापादिनाम् । राजकोशपूरणार्थं प्रजाभ्यो गृहीतस्वाधीनकल्पकोशस्थद्रव्यहारिणाम् ॥ ३४ ॥

स्वाधीनाधिकृतानां । कृतं यद्वेतनं तन्मध्येऽर्धवेतनग्राहिणाम् । आभिचाररतात्मनां । कृत्रिमकृत्याद्युत्पादनाग्निविषप्रयोगादिरूपकृत्यासक्तचित्तानाम् ॥ ३५ ॥

राजस्वे ग्रामादावन्यत्वकर्तृणाम् राज्ञ इदं न भवतीति । अपित्वन्यस्येत्यन्यस्वामिनं प्रदर्शयित्वा गूढं तस्मात् द्रव्यग्राहिणमित्यर्थः ॥ ३६ ॥

तेभ्यश्चरेभ्यः ॥ ३७ ॥

मू.—अधिकारप्रच्यवैश्च कारागाराधिवासनैः ।
निगलालम्बनैश्चैव राष्ट्रनिष्कासनैस्तथा ॥ ३८ ॥

सर्वस्वहरणैश्चैव नीचकृत्यप्रचोदनैः ।
प्रावारेणैकवस्त्रेण चतुष्पथनिवेशनैः ॥ ३९ ॥

परिवर्तनाधिकारैश्च कायक्लेशोपपादनैः ।
मृद्वाहैश्च कराघातैर्विरूपकरणैस्तथा ॥ ४० ॥
एतैरन्यैर्यथाशास्त्रं शिक्षयेदधिकारिणः ।
राज्ञा तु शिक्षितान् दृष्ट्वा ये हसेयुश्च तानपि ॥ ४१ ॥

व्या.—शिक्षाप्रकारमाह—अधिकारप्रच्यवैश्चेत्यादिना । अधिकाराण प्रच्यवैः । निष्कासनैः । कारागारेषु । "कारास्याद्बन्धनालय" इत्यमरः । अगारशब्दः वैलक्षण्यद्योतकः ।

अधिवासनैर्विन्यासैः । निगडानां पादबन्धनानां । आलम्बनैरसज्जनैः राष्ट्रनिष्कासनैः स्वदेशान्निर्वासनैः । पुरुषभेदविवक्षया बहुवचनप्रयोग ॥ ३८ ॥

नीचकृत्यप्रचोदनैर्दौवारिकाद्याज्ञायां प्रेरणैः । प्रावारेण कटिबद्धेनैकेनैव वस्त्रेण । सहचतुष्पथे नगरमध्ये वीथ्यां निवेशनै. । आसायं । "प्रावारस्स्यात्कटितट" इति मेदिनी ॥ ३९ ॥

परिवर्तनाधिकारैरधिकारविनिमयैरित्यर्थः । मृदां मृत्तिकानां वाहैः सालादिबन्धनार्थवहनै. ॥ ४० ॥

राज्ञापराधानुसारेण शिक्षितान्प्राप्तशिक्षान् । राजहेलनार्थं येऽपहसंति तानपि शिक्षयेदिति पूर्वेणान्वयः । इदं शिक्षणं लोके स्वगुरुत्वसम्पादनार्थमिति ज्ञेयम् ॥ ४१ ॥

मू.—राज्ञोऽपहासनिन्दे च राजदारान् हसंति ये ।
नीवृज्जनानमार्गस्थान् ज्ञात्वा संशिक्षयेन्नृपः ॥ ४२ ॥

व्या.—राज्ञोऽपहासस्तत्सभायां स्थित्वा दन्तभ्रूदर्शनपूर्वकोपहासः । तन्निन्दाश्च ये कुर्वन्तीति शेषः । राजदारान् राजावरोधवधूजनान् । नीवृति देशे ये जनाः—तानमार्गस्थान् दुर्मार्गस्थान् । स्वस्वधर्मस्थापनया शिक्षयेदित्यर्थः ॥ ४२ ॥

मू.—मृदुर्हि राजा सततं लघुर्भवति सर्वशः ।
तीक्ष्णाच्चोद्विजते लोकस्तस्मादुभयमाचरेत् ॥ ४३ ॥

व्या.—मृदुर्लघुः अल्पतराशिक्षापरः । अलघुभृत्यैरपि परिभूतः तर्हि उग्रदण्डवता भवितव्यमित्याशङ्क्य नेत्याह । तीक्ष्णादिति । उद्विजते बिभेति । तस्मात्कारणात् । उभयं कालविशेषमृदुत्वं तदन्यकाले चोग्रत्वं च सेव्यमिति भावः ॥ ४३ ॥

मू.—राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् ।
राजन्यसति लोकेऽस्मिन्कुतो भार्या कुतो धनम् ॥ ४४ ॥

व्या.—राजन्वति प्रदेशे प्रजाभिःस्थेयमित्याह राजानमिति । प्रथमं मुख्यतया विन्देत्सम्पादयेत् । ततो भार्यां धनञ्च स्वकीयत्वेन विद्यादित्यर्थः अस्मिन् लोके प्रपञ्चे राजन्यसति असत्पुरुषे सति भार्या च धनञ्च कुतः । "नाराजके जनपदे भार्या वा वर्तते वश" इत्यादि रामायणवचनात् ॥ ४४ ॥

मू.—आयानुकूलं कुर्वीरन् भृत्या राजहितैषिणः ।
पश्चान्निवेदयेयुस्तदन्यथा दण्डभागिनः ॥ ४५ ॥

व्या.—राजहितैषिणो भृत्या आयानुकूलमापूर्वप्राप्तयनुसारिकर्म स्वयं राजाज्ञां विना स्वतन्त्रं कुर्वीरन् । कर्तुं शास्त्रसम्मताः । पश्चात्कर्म कृत्वा निवेदयेयुः । पत्रद्वारा स्वयं वापि ज्ञापयेयुरिति भावः । अन्यथा राज्ञोऽनुकूलकृत्याकरणे दण्डभागिनो दण्डार्हाः ॥ ४५ ॥

मू.—ग्रामस्याधिपतिः कार्यो दशग्रामाधिपस्तथा ।
विंशतीशश्शतेशश्च सहस्रेशो नृपेण तु ॥ ४६ ॥

व्या.—राज्यपालनक्रममाह ग्रामस्येति । नृपेणाधिराजेन स्वेन ॥ ४६ ॥

मू.—ग्रामीयान् ग्रामदोषांश्च ग्रामिकः परिपालयेत् ।
तानाचक्षेत दशिने दशको विंशतीश्वरे ॥ ४७ ॥

विंशतीशश्च तत्सर्वं वृत्तं जानपदे जने ।
ग्रामाणां शतपालाय सर्वं वै विनिवेदयेत् ॥ ४८ ॥

व्या.—ग्रामीयान् ग्रामे भवान् परिपालयेत । लक्षणया विचारयेदित्यर्थः ॥ ४७ ॥

जानपदेशविद्यमानकाले ॥ ४८ ॥

मू.—यानि ग्रामिकभोज्यानि ग्रामिकस्तान्युपाश्नुते ।
हिरण्यधान्यभागेन यतो राष्ट्रीयकस्स्मृतः ॥ ४९ ॥

व्या.—ग्रामीयको ग्रामीययोगक्षेमाधिकृतः । यानि ग्रामिकभोज्यानि तानि हिरण्यधान्यभागेन हिरण्यांशधान्यांशग्रहणेन तानि हिरण्यधान्यादीन्युपाश्नुते । भोक्तुमर्हति । तदेव तस्य जीवनमित्यर्थः । यतो राष्ट्रीयकः कुलक्रमेण तद्रक्षकः ॥ ४९ ॥

मू.— दशी तेन विभक्तव्यो विंशतीशस्तथा स्मृतः ।
ग्रामं ग्रामशताध्यक्षो भोक्तुमर्हति सत्कृतः ॥ ५० ॥

व्या.—दशी दशग्रामाधिपः तेन दशग्रामीयधनधान्येन विभक्तव्यो विभागं प्रापणीयः । पोषणीय इति यावत् । विंशतीशो विंशतिग्रामाधिपोऽपि तथा । तादृशजीवनवान् । ग्रामशताध्यक्षस्य जीवनमाह—ग्राममिति । ग्रामं पर्वशतोत्पादकं । एकग्रामजन्यपर्वान्या । सत्कृतो ग्रामवासिभिरिति शेषः ॥ ५० ॥

मू.—शाखानगरमर्हस्तु सहस्रपतिरुत्तमम् ।
दिक्पालासनयोग्योऽसौ शतादिग्रामनायकः ॥ ५१ ॥

व्या.—सहस्रग्रामपतेर्वेतनमाह शाखानगरमिति । शाखानगरं नाम प्रधाननगरे स्थलसङ्कोचेनावरणाद्बहिर्बद्धघोषविशेषः । "तच्छाखानगरं वेशो वेश्याजनसमाश्रय" इत्यमरः ॥ शाखानगरन्तु त्रिंशत्पर्वसम्पादकम् । ते शतग्राममधिकृत्य सहस्रान्तनायकाः । दिक्पालासनयोग्याः अष्टवर्णकहस्तिकादिवराकीनिर्मितसोपधानोपवेशयोग्याः ।

दिक्पालांशवता राज्ञा निर्दिष्टं यद्वरासनम् ।
दिग्वर्णाचित्रितं राज्ञां दिक्पालासनमुच्यते ॥

इति नीतिविवेके ॥ ५१ ॥

मू.—तेषां यद्ग्रामकृत्यं स्याद्राष्ट्रकृत्यञ्च यद्भवेत् ।
धर्मज्ञस्सचिवः कश्चित्तदपेक्षेदतन्द्रितः ॥ ५२ ॥

व्या.—अतन्द्रितः आलस्यशून्यः । कश्चिद्विलक्षणस्सचिवः । राजसमीपवर्तीति राष्ट्राधिकारकृत्यम् । अपेक्षेत् ॥ ९२ ॥

मू.—नगरे नगरे च स्यादेकस्सर्वार्थचिन्तकः ।
उच्चस्थानो घोररूपो नक्षत्राणामिव ग्रहः ॥ ९३ ॥

व्या.—सर्वार्थचिन्तकस्सर्वाधिकारी । घोररूपस्सर्वनिग्राहकाकृतिमान् । ग्रहश्चन्द्रः ॥ ९३ ॥

मू.—स च तान् सम्परिक्रामेत्सर्वानेव सदा कृती ।
तेषां वृत्तिं हि गणयेत्सम्यग्राष्ट्रैस्स्वचारकैः ॥ ९४ ॥

व्या.—स प्रधाननगरनीचैर्विद्यमाननगराधिकृतः । तान् जनपदान् । सम्परिक्रामेत्सम्यक् सञ्चरेदित्यर्थः । तेषां तद्देशवासिनां । वृत्तिं मर्यादाम् ॥ ९४ ॥

मू.—जिघांसवः पापकामाः परस्वादायिनः शठाः ।
तत्तद्रक्षास्वधिकृतास्तेभ्यो रक्षेदिमाः प्रजाः ॥ ९५ ॥

व्या.—अधिकृता अधिकारिणः । पूर्वार्धबोधितगुणकाः मदान्धा भवन्तीति प्रसिद्धिः । तस्माद्रक्ष्या इत्यर्थः ॥ ९५ ॥

मू.—उच्चावचाः कराः न्याया पूर्वराज्ञां युधिष्ठिर ।
यथा यथा न हीयेयुस्तथा कुर्यान्महीपतिः ॥ ९६ ॥

व्या.— कराः बलयः ॥ ९६ ॥

मू.—ब्राह्मणेभ्यो नाददीत शुल्कं राजा तथा करम् ।
न ब्राह्मणधनस्वामी कदाचित्स्यान्नराधिपः ॥ ९७ ॥

व्या.—शुल्कं घट्टादिषु नूतनवस्त्रधान्यकैशेयाद्याहरणनिमित्तकद्रव्यम् । "घट्टादिदेयं शुल्कोऽस्त्री" त्यमरः ॥ ९७ ॥

मू.— आय तु विपुलं कुर्याद्व्ययं कुर्यात्सुसूक्ष्मकम् ।
नीवृद्यात्रां तथा भूपो लोकानुग्रहकृत्स्वयम् ॥ ९८ ॥

व्या.—आयमागतिं । विपुलं महान्तम् । व्ययं स्वहस्ताद्व्ययम् । सुसूक्ष्मकं । "पादेनैकेन सेनायाः पादार्धेन स्वजविनम् । तद्धनार्धोद्धर्मकृत्यं कोशपूर्तिस्तृतीयतः । तुरीयार्धं पृथक् स्थाप्यं शेषार्धन्तु यथेच्छिकम् ।

राजा त्वेवं हि विभजन् चिरमैश्वर्यमश्नुते ।" इति स्मृत्यनुरोधात्कुर्यादित्यर्थः । नीवृद्यात्रा देशसञ्चारः । स्वयं लोकानुग्रहकृत् सन् कुर्यादित्यन्वयः । प्रतिवर्षसञ्चारेण बहुवृत्तान्तज्ञाने सति तत्तज्जीवनधर्मपालनं भवतीत्यर्थः ॥ ५८ ॥

मू.—बन्धयेच्च तटाकानि सरांसि स्वगृहाणि च ।
श्रेणीवृक्षांस्तथारामान्गोपयेच्च सुमार्गकृत् ॥ ५९ ॥

व्या.—स्वगृहाणि तत्तन्नगरविद्यमानानि । श्रेणीवृक्षान्राजमार्गेषूभयपार्श्वयोः श्रेण्याकारतया विद्यमानपादपान् । सुमार्गकृन्निम्नोतसमीकरणेन, जलमार्गबन्धनेन, गुल्मस्थापनपूर्वकं होराद्युपद्रवपरिहारेण च सम्यङ्मार्गकर्त्रा भवितव्यमित्यर्थः ॥ ५९ ॥

मू.— सम्मानञ्चैव कुर्वीत विद्यावृद्धद्विजातिषु ।
अवमत्यादिभिर्दण्डैर्विप्रान्विद्यासु योजयेत् ॥ ६० ॥

व्या.—विद्यया स्वस्वकुलोचितवेदशास्त्राद्यभ्यासेन । या वृद्धाः । उत्तमा द्विजातयः । ब्राह्मणाः । तासु संमानं स्वसन्मुखागमनेन पूर्वजीवनादधिकं । वस्त्रभूषणदानादिरूपं । विप्राननधीतवेदशास्त्रादिकान् ॥ ६० ॥

मू.—अलब्धमीहेद्धर्मेण लब्धं यत्नेन पालयेत् ।
पालितं वर्धयेन्नित्यं वृद्धं पात्रेषु निक्षिपेत ॥ ६१ ॥

व्या.—अलब्धं शत्रुराज्यस्वर्गादिकं । धर्मेण राज्यपालनतपःकरणरूपेण । वृद्धमैश्वर्यम् । पात्रेषु सत्पात्रेषु । "योग्यभाजनयोः पात्र" मित्यमरः ॥ ६१ ॥

मू.—भोगांश्च दद्याद्विप्रेभ्यो वसूनि विविधानि च ।
अक्षयोऽयं विधी राज्ञां यद्विप्रेषूपपादनम् ॥ ६२ ॥

व्या.—अक्षयो जन्मान्तरोपयोगितया क्षयरहितः ॥ ६२ ॥

मू.— दत्वा भूमिं निबन्धं वा कृत्वा लेख्यन्तु कारयेत् ।
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥ ६३ ॥

व्या.— निबन्धं पौरश्रेणिभिर्वाप्यमानदेवब्राह्मणजीविनं कृत्वा कारयित्वा चेत्यर्थः । आगामिनो ये भद्रनृपतयः धार्मिका राजानः तेषां परिज्ञाना-यावबोधनाय । भद्रपदादृष्टैः राजभिः न चाल्यत इति ध्वनितम् ॥ ६३ ॥

मू.— दत्वा भूम्यादिकं राजा ताम्रपट्टेऽथवा पटे ।
शासनं कारयेद्धर्मं स्थानवंशादिसंयुतम् ॥ ६४ ॥

व्या.— धर्मं धर्मसूचकम् ॥ ६४ ॥

मू.— स्वदत्ताद् द्विगुणं पुण्यं परदत्तानुपालनम् ।
परदत्तापहारेण स्वदत्तं निष्फलं भवेत् ॥ ६५ ॥

व्या.— स्वदत्तवत्परदत्तपालनं परमो धर्म इत्याह । स्वदत्तादिति । परदत्तापहारे धर्महानिरपीत्याह— परदत्तापहारेणेति । उत्कटधर्मः धर्मं नाशयतीति भावः ॥ ६५ ॥

मू.— पूर्वं राजकृता या तु मर्यादा जनजीविका ।
तां न च व्यंसयेद्राजा नाशयन्निन्दितो भवेत् ॥ ६६ ॥

व्या.— जनजीविका जनजीवनयोग्या । न च व्यंसयेत् नैव गमयेदि त्यर्थः । तदपहारे हानिमाह— निन्दितो भवेदिति । "यावल्लोकेष्वकीर्तिस्स्यात्तावन्नरकमश्नुते । यावत्कीर्तिर्मनुष्यस्य तावत्स्वर्गे महीयते ।" इत्यनुशासनिकभारतवचनात् ॥ ६६ ॥

व्या.— विजयहेतुभूतमन्त्रो राज्ञामत्यावश्यक इत्याह— मन्त्र इति

मू.— मन्त्रो विजयमूलं हि राज्ञां भवति नित्यदा ।
अतस्तु मन्त्रिभिर्मंत्रं सह राजा विचिन्तयेत् ॥ ६७ ॥

व्या.— नित्यदा निरन्तरं । निरन्तरमन्त्रप्रस्तावे राज्ञां बहुकार्यवत्त्व निमित्तम् ॥ ६७ ॥

व्या.— गिरिपृष्ठं समागत्य प्रासादं वा रहो गतः ।
अरण्ये निश्शलाके वा मन्त्रयेत्पृथिवीपतिः ॥ ६८ ॥

व्या.— मन्त्रस्थानान्याह— गिरिपृष्ठमित्यादिना । निश्शलाके व्याघ्रादिभयरहिते । "जन्तोर्भीतिश्शलाका स्या"दिति मेदिनी ॥ ६८ ॥

मू.—निस्तम्भे निर्गवाक्षे च निर्भित्त्यन्तरसंश्रये ।
प्रासादाग्रेऽप्यरण्ये ह मन्त्रयेत् सावधानतः ॥ ६९ ॥

व्या.—निर्भित्त्यंतरसंश्रये अंतस्तिर्यग्भित्तिरहिते । सावधानतोऽप्रमादात् । मंत्रस्थानस्य मन्त्रिव्यतिरिक्तप्राकृतजनराहित्यादिरूपगुणासत्वे बुद्धिस्थैर्य-दातृत्वं न संघटत इति तत्तद्विशेषणयोगः ॥ ६९ ॥

व्या.—मंत्रगुप्तेः प्रयोजनमाह—यस्येत्यादि ।

मू.—यस्य मंत्रं न जानन्ति समागम्य पृथग्जनाः ।
स चिरं पृथिवीं भुङ्क्ते कोशहीनोऽपि पार्थिवः ॥ ७० ॥

व्या.—पृथग्जनाः प्राकृताः ; "प्राकृतश्च पृथग्जन" इत्यमरः । कोशही-नोऽपीत्यनेन मंत्रस्य कोशादिसंपादकहेतुत्वमपि दर्शितम् ॥ ७० ॥

मू.—जडान्धमूकबधिरान् काणशौण्डाधमानपि ।
स्त्रीम्लेच्छव्याधितव्यंगान् मंत्रकाले विवर्जयेत् ॥ ७१ ॥

व्या.—जडा अज्ञाः । अंधा जात्यंधाः । मूका निर्वाचः । बधिराः श्रोत्रेन्द्रियसामर्थ्यहीनाः । काणा एकनेत्रहीनाः । शौण्डा मत्ताः । अधमाः संकरजातीयाः । म्लेच्छा अपप्रयोगकर्तारः । तुरुष्कादय इत्यन्ये । व्याधिताः श्वासखासादिदीर्घरोगिणः । व्यंगाः पौगण्डानि । "विकलांगस्तु पौगण्ड" इत्यमरः । एतेषां प्रविभेत्तारमिति । मन्त्रगो-गोपनविषये वणिक्भाघः ।

"मन्त्रो योध इवाधीरः सर्वांगैस्संवृतैरपि ।
चिरं न सहते स्थातुं परेभ्यो भेदशंकये" ति ।

व्या.—मन्त्रोपयुक्तप्रमेयानाह—उपायानित्यादिना

मू.—उपायांश्चतुरो युञ्ज्यात्षड्गुणानुदयांश्च त्रीन् ।
तिस्रः शक्तीश्च सिद्धीश्च मन्त्रयेन्मान्त्रिभिः सह ॥ ७२ ॥

व्या.—उपायान्विभजते—सामेत्यादिना ।

मू.—साम दानं च भेदश्च दण्डश्चेति चतुर्विधः ।
उपायस्सर्वकृत्येषु प्रयोज्यो बुद्धिजीविभिः ॥ ७३ ॥

व्या.—प्रथमोद्दिष्टं साम विभजते—सामेति ।

मू.—साम पञ्चविधं ज्ञेयं परानुसरणं तथा ।
परस्परोपकारश्च तदीयगुणकीर्तनम् ॥ ७४ ॥
बन्धुत्वज्ञापनं स्वात्मसमर्पणमितीव च ।
एवं पञ्चविधं ज्ञात्वा समासव्यासतस्सुखी ॥ ७५ ॥

व्या.—स्वात्मसमर्पणं भवदीयोऽहमिति वाचात्मसमर्पणम् । समासव्यासतस्सामान्यतो विशेषतश्चेत्यर्थः । सुखी राज्यसुखवान् भवतीत्यर्थः । ॥ ७५ ॥

व्या.—द्वितीयमुपायं विभजते--

मू.—दानं पञ्चविधं प्राहुः स्वधनस्य समर्पणम् ।
अन्यद्रव्यग्रहामोदोऽपूर्ववस्तुप्रदानकं ॥ ७६ ॥

व्या.—अन्यद्रव्यस्य ग्रहे ग्रहणतन्त्र आमोदः अनुमोदनम् । अपूर्ववस्तुप्रदानमिभि भेदः ॥ ७६ ॥

मू.—परद्रव्यप्रेरणञ्च ऋणमोचनमेव च ।
स्वदौर्बल्ये प्रयोगोऽस्य शत्रुपक्षे स्वयं विधिः ॥ ७७ ॥

व्या.—परद्रव्यप्रेरणं शत्रुद्रव्यग्रहणविषये प्रोत्साहनमित्यर्थः । दानप्रयोगकालमाह—स्वदौर्बल्य इति । दानं कुत इत्यत्राह—शत्रुपक्षे । रिपोरधने ? इत्यर्थः ॥ ७७ ॥

व्या.—तृतीयमुपायं विभजते—भेद इति ।

मू.—भेदस्त्रिधान्यतरस्नेहसंपादनं पुरा ।
परस्परं मित्रभेदस्तथा सन्तर्जनं परम् ॥ ७८ ॥

व्या.—एकेन स्नेहसम्पादनं पुरा प्राथमिक इत्यर्थः । परस्परं मित्रभेदः अन्योन्यमित्रत्वच्यावनमुपजापेन । परं तृतीयमित्यर्थः ॥ ७८ ॥

व्या.—चतुर्थमुपायं विभजते—दण्ड इति ।

मू.—दण्डस्त्रिधार्थहरणं परिक्लेशस्तथैव च ।
देहसंशिक्षणं चेति दण्डभेदाः प्रकीर्तिताः ॥ ७९ ॥

व्या.—परिक्लेशस्तुदनम् ॥ ७९ ॥

व्या.— सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्यषड्गुणेषु सन्धेर्द्वैविध्यमाह —तदात्वेति ।

मू.—तदात्वायतिसंयुक्तः संन्धिर्ज्ञेयो द्विलक्षणः ।
राज्ञा कृतश्च कार्यार्थमकाले काल एव वा ॥ ८० ॥

व्या.—तदात्वसन्धिः । उत्तरकालसंयुक्तसन्धिश्चेतिद्विलक्षणः द्विप्रकारः । कार्यार्थे जयार्थे ॥ ८० ॥

मू.—अमित्रे चैव विकृते द्विविधो विग्रहः स्मृतः ।
एकाकी वाच्यैककारिकार्ये प्राप्ते यदृच्छया ॥ ८१ ॥
संभूय चैव मित्रेण द्विविधं यानमच्यते ।

व्या.—अमित्रे विकृते शत्रौ विकारं प्रापिते सति तदा अकाले वर्षादिकाले शरत्काले वा विग्रहः कार्यः । तथा चाकालविग्रहः कालविग्रहश्चेति द्विप्रकारः विग्रहः । विरोध इति न दण्डेन पौनरुक्त्यम् । यानस्य द्वैविध्यमाह—एकाकीति एकाकी वाचक मुद्दिश्यैककारि तदन्यस्वाभिलषितविधायकं इदमेव सन्धाययानम् ? ।

मू.—क्षीणस्य चैव क्रमशो दैवात्पूर्वकृतेन वा ॥ ८२ ॥
मित्रस्य चानुरोधेन द्विविधं कृतमासनम् ।
बलस्य स्वामिनश्चैव स्थितिकार्यस्य सिद्धये ॥ ८३ ॥

व्या.—मित्रानुरोधेनासनञ्चेति द्विविधम् । कार्यस्य सिद्धये कालसहकृतजयाय ॥ ८२, ८३ ॥

मू.—द्विविधं कीर्त्यते द्वैधं तद्गुणागुणवेदिभिः ।
यदावगतन्यूनत्वमाधिक्यं ध्रुवमात्मनः ॥ ८४ ॥

व्या.—द्वैधं द्वैधीभावः । शत्रुन्यूनत्वकृतः आत्माधिक्यकृतश्चेति द्विप्रकारः द्वैधीभावः ॥ ८४ ॥

मू.—अर्थसम्पीडनार्थञ्च पीड्यमानस्य शत्रुभिः ।
साधुभिर्व्यपदेशार्थो द्विविधस्तु समाश्रयः ॥ ८५ ॥

व्या.—अर्थसम्पीडनार्थः शत्रुपीडनजन्यव्यपदेशार्थः । व्यवहारार्थोऽर्थसम्पीडनार्थः । साधुभिर्व्यवहारार्थश्चेति समाश्रयो द्विविधः ॥ ८५ ॥

मू.—क्षयस्स्थानञ्च वृद्धिश्चेत्युदयास्त्रिविधस्स्मृतः ।
प्रभुमन्त्रोत्साहभेदाच्छक्तिस्तु त्रिविधा मता ॥ ८६ ॥

तत्साध्यसिद्धयस्तिस्रः तेषु भेदा बहुस्स्मृताः ।
एतद्धि नीतिसर्वस्व भूप किं विस्तरेण ते ॥ ८७ ॥

एवं सर्वमिदं राजा सह संमन्त्र्य मन्त्रिभिः ।
मध्याह्नेऽर्थागमं कृत्वा भोक्तुमन्तःपुरं व्रजेत् ॥ ८८ ॥

व्या.—एवं पूर्वोक्तसामादिकमिदं मन्त्रिभिस्सह सम्मन्त्र्य अर्थागमञ्च कृत्वा मध्याह्ने सति भोक्तुमन्तःपुरं व्रजेदित्यन्वयः ॥ ८८ ॥

मू.—सुपरीक्षितमन्नाज्ये अद्यान्मन्त्रैर्विषापहैः ।
भुक्त्वा स विहरेच्चैव स्त्रीभिरन्तः पुरे सह ॥ ८९ ॥

व्या.—विषापहैर्मन्त्रैस्सुपरीक्षितं निर्दोषीकृतं । अन्नाज्ये अन्नञ्चाज्यञ्चेति अन्नसहितमाज्यमित्यर्थः । केवलसमाहारो वा । अद्यात् भक्षयेत् । संविहरेत् आलापादिना सन्तोषयेन्नतु संभोगादिनेत्यर्थः । दिवास्वापमैथुनयोः धर्मशास्त्रविरोधादिति भावः ॥ ८९ ॥

मू.—धर्मशास्त्रपुराणानि ह्यपराह्णे समभ्यसेत् ।
संध्याञ्चोपास्य विधिवदग्निं हुत्वा समाहितः ॥ ९० ॥

भुक्त्वा भागवतं शास्त्रं पठित्वा ध्यानसंयुतः ।
संविशेच्च यथाकालमुत्तिष्ठेद्विगतक्लमः ॥ ९१ ॥

व्या.—संध्यामुपास्य सन्ध्याकाले जाते सतीति शेषः । भुक्त्वा "कालयोर्भोजन"मित्यापस्तम्बवचनरीत्या रात्रौ भुक्त्वा भगवत्प्रतिपादकं शास्त्रं पठित्वा । अनन्तरं भगवद्ध्यानसंयुतस्सन् संविशेत् । स्वपेत् विहरेद्वा । यथाकालमपररात्रौ विगतक्लमो गतपरिश्रमः ॥ ९०, ९१ ॥
एवं वृत्तस्येत्यादिना नीत्यभ्यासप्रयोजनं वक्ति ।

मू.—एवंवृत्तस्य नृपतेर्नीतिमार्गानुसारिणः ।
धर्मार्थकाममोक्षश्च सिद्ध्येयुर्नात्र संशयः ॥ ९२ ॥

पृथुमेवं प्रशास्यैवं ब्रह्मा लोकगुरुःस्वयम् ।
तत्रैवान्तर्दधे देवो दैवतैस्सहितस्तथा ॥ ९३ ॥

व्या.—अन्तर्दधे अदर्शनं गत ॥ ९२, ९३ ॥

मू.—वैन्योऽपि तत्तथा चक्रे ब्रह्मप्रोक्तं पुरातनम् ।
भुक्त्वा ससागरामुर्वीं अन्ते ब्रह्म जगाम ह ॥ ९४ ॥

व्या.—ब्रह्म आनन्दो ब्रह्मेति व्यजानादिति श्रुत्या शाश्वतमानन्दं प्राप ॥ ९४ ॥

प्रकृतप्रश्नसमाधानं निगमयति—पारीक्षितेति ।

मू.—पारीक्षित त्वमप्येवं कृत्वा सौख्यं भविष्यसि ।
ख्यातिश्च लोके संस्थाप्य परां गतिमवाप्स्यसि ॥ ९५ ॥

व्या.—हे पारीक्षित परीक्षित्पुत्र जनमेजय । ख्यातिं कीर्तिं । "ख्यातिः कीर्तौ प्रसिद्धौ चे"ति मेदिनी ॥ ९५ ॥

मू.—यावत्कीर्तिर्मनुष्यस्य लोकेषु विचरिष्यति ।
तावद्वर्षसहस्राणि ब्रह्मलोके महीयते ॥ ९६ ॥

व्या.—इह कीर्तिमतः उत्तमलोकप्राप्तिरित्यत्र धर्मशास्त्रवचनमुदाहरति-यावदिति । महीयते स्थित्वा प्रकाशते ॥ ९६ ॥

मू.—पठेच्च य इदं काव्यं शृणुयाद्वा समाहितः ।
ब्राह्मणः क्षत्रियो राजा विशेषेण नराधिप ॥ ९७ ॥
वैश्यो वा शूद्रजातीयः स्त्रियो राजपरिग्रहाः ।
ते कीर्तिमन्तो भूत्वेह परत्र गतिमाप्नुयुः ॥ ९८ ॥

व्या.—अस्य काव्यस्य पठनश्रवणादौ शिष्टप्रवृत्तये फलं दर्शयति । पठेदित्यादिना । विशेषेण राजा पठेत् । तस्यैव नीतिप्रवर्तकत्वादिति भावः । हे नराधिप ॥ ९७ ॥

स्त्रियो राजपरिग्रहा राजभार्याः । अन्यस्त्रीणां नीतौ प्रयोजनाभावात् । राजपरिग्रहा इति स्त्रीविशेषणम् इत्यन्ये । परगतिमत्त्वे कीर्तिमत्त्वं निमित्तम् । ॥ ९८ ॥

मू.—नीतिशास्त्रमिदं प्रोक्तं मया ते जनमेजय ।
संक्षेपेण गमिष्यामि यत्र व्यासो गुरुर्मम ॥ ९९ ॥

व्या.—स्वगमने राजानुमतिं पृच्छति—नीतिशास्त्रमित्यादिना ॥ ९९ ॥

मू.—वैशम्पायन इत्युक्त्वा तत्रैव स जगाम ह ।
पारीक्षितोऽपि मुमुदे सुनीत्या पालयन् प्रजाः ॥ १०० ॥

॥ इति वैशम्पायननीतिप्रकाशिकायां
राजव्यापारकथनं नामाष्टमः सर्गः ॥

॥ नीतिप्रकाशिका समाप्ता ॥

व्या.—तमेव व्यासमुद्दिश्यैव वैशम्पायनः । पारीक्षितोऽपि जनमेजयोऽपि । सुनीत्या प्रजाः पालयन् मुमुदे सन्तोषेण स्थितवानित्यन्वयः ॥ १०० ॥

॥ इति श्रीसीतारामकृतायां नीतिप्रकाशिकातत्त्वविवृतावष्टमस्सर्गः ॥

॥ नीतिप्रकाशिकातत्त्वविवृतिः समाप्ता ॥

श्री

# श्लोकानुक्रमणिका

श्रीः

## विषयसूचिका

# LIST OF AGENTS FOR THE MADRAS GOVERNMENT PUBLICATIONS.

## IN CITY.

ACCOUNT TEST INSTITUTE, Egmore, Madras.
CITY BOOK COMPANY, POST BOX NO. 605, Madras-4.
HIGGINBOTHAMS, Madras.
P. VARADACHARI & CO., Madras.
THE SOUTH INDIA SAIVA SIDDHANTHA WORKS PUBLISHING SOCIETY, LIMITED, Madras.
VENKATARAMA & CO., Madras.
V. PERUMAL CHETTY AND SONS, Madras.
V. RAMASWAMY SASTRULU & SONS, Madras.
OTTRUMAI OFFICE, Madras-17.
M. DORAISWAMY MUDALIAR & CO., Madras.
FREE INDIA CO-OPERATORS' AGENCY, Madras-4.
SOUTH INDIA TRADERS, Royapetta, Madras.

## IN MUFASSAL.

M. C. KRISHNIAH CHETTY, Madanapalle, Chittoor district.
THE EDUCATIONAL SUPPLIES COMPANY, R.S. Puram, Coimbatore district.
D. SREEKRISHNAMURTHY, ONGOLE, Guntur district.
M. SESHACHALAM & CO., Masulipatnam, Krishna district.
TRIVENI PUBLISHERS, Masulipatnam, Krishna district.
HINDUSTAN DIARY PUBLISHERS, Vijayavada, Krishna district.
THE COMMERCIAL LINKS, Governorpet, Vijayavada, Krishna district.
THE MANAGER, Gramodharana, Buckinghampet, Vijayavada, Krishna district.
E. M. GOPALAKRISHNA KONE, Madurai, Madurai district.
K. P. AHMED KUNHI & BROS., Cannanore, Malabar district.
KERALA POLYTECHNIC CO-OPERATIVE SOCIETY, LTD., Kozhikode (South Malabar).
P. K. BROTHERS, Kozhikode (South Malabar).
V. D. MOORTHY, Nellore, Nellore district.
A. VENKATASUBBAN, Vellore, North Arcot district.
TIMES MODERN MART, Salem, Salem district.
K. BHOJA RAO & CO., Mangalore, South Kanara district.
U. R. SHENOY & SONS, Mangalore, South Kanara district.
SRINIVAS & CO., Kumbakonam, Tanjore district.
P. N. SWAMINATHA SIVAN & CO., Pudukkottai, Tiruchirappalli district.
S. KRISHNASWAMI & CO., Tiruchirappalli, Tiruchirappalli, district.
PALANIAPPA BROTHERS, Teppakulam, Tiruchirappalli, Tiruchirappalli district.
V. S. VASAN & CO., Tirunelveli, Tirunelveli district.
S. R. SUBRAMANIA PILLAI, Tirunelveli, Tirunelveli district.
ARIVU NOOLAGAM, Market Street, Ootacamund.

## IN OTHER STATES.

BHANVARILAL JAIN, Motikatra, Agra.
SREE ABHIRAVA VAIDYA SHARADA BOOK DEPOT, Bangalore-2.
THE BANGALORE BOOK CENTRE, Bangalore-2.
THE STANDARD BOOK DEPOT, Bangalore-2.
HARI GOVIND BOOK STALL, Baroda.
NEW BOOK COMPANY, Bombay.
THE POPULAR BOOK DEPOT, Lamington Road, Bombay-7.
THE BOOK COMPANY, Calcutta.
THACKER SPINK & CO., Calcutta.
BHARAT STORES, Ernakulam.
CHAROTAR BOOK STALL, Anand (Gujerat).
OSMANIA UNIVERSITY STUDENTS' CO-OPERATIVE BOOK DEPOT, Laliaguda P.O., Hyderabad (Deccan).
S. M. JAGANATHAN, Nagercoil.
S. V. KAMAT, Kumta (North Kanara).
JAIN BOOK AGENCY, New Delhi.
INTERNATIONAL BOOK SERVICE, Poona.
INTERNATIONAL BOOK HOUSE, Trivandrum.